सात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तम् । किंच **तत्** चक्रं **नहि जराय** नैव खलु जरायै भवति । हे **अग्ने** सर्वदा गमनयुक्त आदित्य । यद्वा अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वात् असावप्यग्निरित्युच्यते । **अत्र** अस्मिंस्त्वदीये चक्रे **मिथुनासः** स्त्रीपुंसरूपेण परस्परं मिथुनभूताः **सप्त शतानि विंशतिः च** विंशत्युत्तरसप्तशत-संख्याकाः **पुत्राः** पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात् त्रातारो वा अहोरात्ररूपाः **तस्थुः** तिष्ठन्ति । निष्पद्यन्ते । षष्ट्यधिकशतत्रयसंख्याकान्यहानि तावत्य एव रात्रय इत्येवं तद्विभागः । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहः संमानः—इत्यारण्यकम् ॥

११. द्वादशऽअरम्—इति पदपाठः ।

माता पितरम्—इत्यत्र मन्त्ररूपं सूचितम् । त्रिनाभि चक्रम्—इत्यत्रोक्तं त्रिषु कालेषु मध्यमकालमाह—द्वादशारं द्वादश मासा अरा यस्य तत् शास्त्रान्तरप्रसिद्धम् । जराय जरणाय योग्यं रक्षितुमशक्यं नहि । वर्वर्ति पुनः पुनर्वर्तते । चक्रं कालचक्रम् । ऋतस्य सत्यस्य परमात्मनः संबन्धिनीं द्यां द्योतमानां ब्रह्मविद्यां परि ऋते विना वर्जयित्वा वर्तते । ब्रह्मविद्याया अभाव एव कालचक्रप्रभाव इत्यर्थः । आ समन्तात् पुत्रा अवयवा अंशा भो अग्ने अग्रणीः मिथुनासः अन्योन्यसंघट्टितरूपा मिथुनीभूता इवात्र कालचक्रे रात्रिदिवसरूपाः सप्तशतानि विंशतिश्च आतस्थुः आतिष्ठन्ति । कल्पस्तु—

> स द्वादशात्मा न हि जीव एव हित्वात्मविद्यां भ्रमतीह कालः ।
> यो मध्यमोंऽशस्तु शतानि सप्त सविंशकानीह दिवा निशा च ॥

इति ॥

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥ १२ ॥**

**पञ्चपादं** पञ्चसंख्याकर्त्वात्मकपादोपेतम् । एतद्धेमन्तशिशिरयोरेकत्वाभि-प्रायम् । **पितरं** सर्वस्य प्रीणयितारम् । **द्वादशाकृतिं** द्वादश मासा एवाकृतयो यस्य तादृशम् । **पुरीषिणं** वृष्ट्युदकेन तद्वन्तं प्रीणयितारं वा । पुरीषमित्युदकनाम । उदकलक्षणं संवत्सरचक्रं **दिवः** द्युलोकस्य **परे अर्धे** । तात्स्थ्यात्ताच्छब्द्यम् । परस्मिन्नर्धेऽन्तरिक्षलक्षणेऽवस्थित आदित्य इत्यर्थः । तस्मिन् **अर्पितं आहुः** ।

एतदुत्तरत्र स्थितमत्राप्यनुषज्यते। यद्यत्रार्पितं तत्तदधीनम्। अतः संवत्सरं सूर्यायत्तमाहुरित्यर्थः। **अथ इमे** अपि **अन्ये** केचन वेदवादिन एवमाहुः। किमिति। **उपरे**। उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेति वा उपरः संवत्सरः। तस्मिन्। कीदृशे। **सप्तचक्रे**। सप्तादित्यरश्मयः। तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः। यद्वा अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त। सप्त चक्राणि पुनः पुनः क्रममाणानि यस्य तादृशे। **षळरे** षड्तव एव अरा नाभौ प्रत्यृताः संबद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे **विचक्षणं** विविधदर्शनकरमादित्यं अर्पितं आहुः। एतदुक्तं भवति। अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेः तीव्रमन्दादिभावस्य च कालाधीनत्वात् तदधीनमाहुः। अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात् तदायत्तत्वमाहुरिति॥

१२. द्वादशऽआकृतिम्—विऽचक्षणम्—सप्तऽचक्रे—षट्ऽअरे—इति पदपाठः।

अनेन प्रथमः काल उच्यते। तस्य कालस्य मूलप्रकृतिरेव देहः। तस्याः पञ्चावयवाः।

> तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
> अविद्या पञ्चपर्वैषा प्रादुरासीन्महात्मनः॥

एते भेदा अन्यैः क्लेशा इत्युक्ताः। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः—इति। वेदान्तवादिन आहुः।

> प्रतीतिमाया मूलाख्या तूलाख्या चेति सा द्विधा।
> विक्षेपावृतिभेदेन तूलाख्या च पुनर्द्विधा॥
> ईशे त्वावरणं नास्तीत्येवमीशे द्विधैव सा।
> त्रिधा जीवे द्विधा देवे एवं पञ्चविधैव सा॥

इति उपनिषद्वचनात्। पञ्च पादा अंशा यस्य तं पञ्चपादम्। जगतां पितरं द्वादशाकृतिं द्वादशाकारम्। सृष्टिस्थितिसंयमार्थानि चत्वारि रूपाणि सन्त्यस्य। विष्णुपुराणाद्युक्तानि प्रकृतिविधात्रादीनि ब्रह्मप्राणिकर्तृकानि दिवः तत्त्वज्ञा आहुः। परे अर्धे कतिपये इतरे तत्त्वविदस्तु पुरीषिणमुदकवन्तं अब्धिशायिनं नारायणं पञ्चपादादिगुणमाहुः। दिव आहुः परे अर्धे पुरीषिणम्—इत्यस्य अन्यमर्थं वदन्ति केचित्। पुरीषशब्देन अविद्या अवान्तरांशितया जीवाख्या उच्यते। तद्वन्तं सूत्रात्मकं नारायणं दिवः स्वर्गलोकस्य परे

उत्कृष्टे अर्धे भागे वैकुण्ठाख्ये लोके । अथानन्तरं इमे प्रसिद्धा अन्ये एके आचार्याः । उपरे । अद्रिः—इत्यादिषु निघण्ट्वादौ त्रिंशन्मेघनामसु मध्ये एकोनविंशति नामानि पर्वतस्याप्यभिहितानि भवन्ति—इति संप्रदायज्ञा आहुः । उपरे कैलासादिके सन्तम् । विचक्षणं विश्वरूपाक्षं रुद्रं तमाहुः । तथा सप्तचक्रे सप्तदेशे महदादिसप्तपरिधौ । षडरे षडृतुपरिधौ वर्तमानेन मध्यमेन चराचरादौ ब्रह्माण्डे अर्पितमधिकृतं ब्रह्माणं तमाहुः ।

> शुद्धप्रधानयोर्मध्ये कालो मायांशभाजकः ।
> शक्तिप्रसारणाकृष्टेर्हेतुर्वाक्याग्निमोचकः ॥
> ब्रह्मविष्णुमहेशादिकारणं तत् प्रचक्षते ।
> तं विष्णुमेके शंसन्ति रुद्रमेके विधिं परे ॥

इति योगयाज्ञवल्क्यश्लोकद्वयम् । कल्पस्तु—

> मायाशरीरी प्रथमस्तु कालः पञ्चांशको द्वादशरूपभिन्नः ।
> तं सर्वयोनिं प्रवदन्ति विष्णुं रुद्रं परेऽमुं चतुरास्यमन्ये ॥

इति ॥

**पञ्चा॑रे च॒क्रे प॑रि॒वर्त॑माने॒ तस्मि॒न्ना त॑स्थु॒र्भुव॑नानि॒ विश्वा॑ ।**
**तस्य॒ नाक्ष॑स्तप्यते॒ भूरि॑भारः स॒नादे॒व न शी॑र्यते॒ सना॑भिः ॥ १३ ॥**

**पञ्चा॑रे** पञ्चर्तुरूपैररैर्युक्ते **च॒क्रे** संवत्सरात्मके **प॒रि॒वर्त॑माने** संवत्सरपरिवत्सरादिरूपेण पुनः पुनरावर्तमाने सति **तस्मि॑न्** कालचक्रे **विश्वा॑ भुव॑नानि** सर्वाणि भूतजातानि **आ त॒स्थुः** आतिष्ठन्ति । वर्तन्ते इत्यर्थः । किं च **तस्य॑** चक्रस्य मध्ये वर्तमानः **अक्षः॑ भूरि॑भारः** सकलभुवनवहनेन प्रभूतभारोऽपि **न त॒प्यते॒** न पीड्यते । किंच **स॒नात् ए॒व** सनातन एव **सना॑भिः** समाननाभिकः सर्वदैकरूपनाभिरसौ **न शी॒र्यते॒** न भिद्यते । यथा लौकिकरथाक्षो भारेण भग्नो भवति अक्षघातेन च नाभिर्विवृता भवति तद्वदत्रापि नास्तीत्यर्थः ॥

१३. पञ्चऽअरे—प॒रि॒ऽवर्त॑माने—भूरि॑ऽभारः—सऽना॑भिः—इति पदपाठः ।

एवंविधकालाख्ये अधीशानं लिङ्गदेहमाश्रितः सर्वसंसारः इत्युच्यते । पञ्चारे ।

> द्विधा खानि च तन्मात्रा प्राणा अवयवक्रियाः ।
> पञ्चारमेवं लिङ्गं स्याच्चक्रं तत्कर्तृचारि च ॥

इति वृद्धशौनकः। कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि तन्मात्राश्च प्राणाश्चान्तःकरणानि चेति राशयः। एवं पञ्चावयवा अस्य। तत्करोतीति चक्रम्। कृञः केचित्। लिङ्गशरीर-मेकमेव कर्तृ। न त्वात्मा। अविवेकादात्मनि कर्तृत्वं प्रतीतम्। यद्वा चरतीति चक्रम्। रूपसिद्धिरुन्नेया। लिङ्गधारकमेव लोकान्तरसंचारित्वमात्मन इत्युक्तं भवति। उक्तं च—

> देशे कर्तरि चक्रं स्यादायुधे चक्रसंज्ञके।
> तर्पके च प्रतीघाते कालभ्रामकपक्षिषु॥

इति। तस्मिन् पञ्चारे चक्रे परिवर्तमाने लोकान्तरं वाच्छति सति तस्मिन् परोक्षे आतस्थुः आधारीकृत्य तिष्ठन्ति। विश्वा सर्वाणि भुवनानि स्थूलशरीराणि तस्य च भावविकारा इति। तस्य चक्राख्यस्य लिङ्गस्य अक्षः भ्रामक आधारः प्रथमः कालः। शुद्ध आत्मा प्रधानं च इत्येके। न तप्यते न भ्राम्यति न कदाचिदपि नश्यति। तदुक्तं योगग्रन्थे—

> शुद्धः कालः प्रधानं च त्रीणि नित्यानि जङ्गमम्।
> स्थावरं च न नित्ये स्तः प्रपञ्चो भेदपञ्चकः॥

इति। ततः भूरिभारो भूरीणां भर्ता। आधारनाशे सर्वशून्यता स्यादित्यर्थः। किंच सनात् सर्वदैव सनाभिः चक्रस्य लिङ्गस्य नाभावेव वर्तमानोऽपि जीवात्मा न शीर्यते न नश्यति। परमार्थतो न देहत्रयधर्मेण युज्यते। जीवात्मनाशे कृतनाशाकृतनाशाभ्या-गमप्रसङ्गः। कल्पस्तु—

> पञ्चारके कर्तरि लिङ्गदेहे देहः स्थवीयान् भ्रमति स्वधमः।
> कालो न नश्येदिह सर्वधारी जीवोऽपि नो नश्यति देहधर्मैः॥

इति। प्रशंसायां कः।

> प्राणस्तन्मात्रकाः खानि द्विविधानि मनोगणः
> एवं पञ्चारकं कर्तृ लिङ्गं तच्चारि तत् स्मृतम्॥

इति। तद्धर्मान् जीव आत्मन्यध्यस्यति स्थूलदेहादिधर्मांश्च इति वृथासंसारी॥

**सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति।**
**सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा॥ १४॥**

**सनेमि** समाननेमि एकप्रकारबहिर्वलयमक्षीणनेमि **चक्रं** संवत्सराख्यं **अजरं** सदातनमपि जरारहितं **वि वावृते** पुनः पुनर्विशेषेण वर्तते। **उत्तानायां**

ऊर्ध्वतनायां ईषायां उपरिविस्तृतभूम्यां वा **दश** इन्द्रादयः पञ्च लोकपाला निषाद-पञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसंख्याका **युक्ताः** स्वस्वव्यापारयुक्ता **वहन्ति** निर्वहन्ति । कृत्स्नं जगन्निर्वहन्ति इत्यर्थः । तन्निर्वाहार्थत्वात् कालस्य । किंच **सूर्यस्य** आदित्यस्य **चक्षुः** ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम् । चक्षुः ख्यातेर्वा चष्टेर्वा—इति निरुक्तम् । **रजसा** वृष्ट्युदकेन **आवृतं** व्याप्तं **एति** गच्छति । उदकं रज उच्यते—इति यास्कः । **तस्मिन्** तादृशे मण्डले **विश्वा भुवनानि** सर्वाणि भूतजातानि **आर्पिता** आर्पितानि । तदधीनत्वात्तेषाम् ॥

१४. सऽनेमि—आऽवृतम्—इति पदपाठः ।

अनेनान्यदपि जगच्चक्रमस्तीति प्रासङ्गिकं वदन् वेदः सर्वमुक्तिपक्षं निराचष्टे । चक्रं जगच्चक्रम् । भ्रमतीति वा चरतीति वा चक्रम्— इति शाकपूणिः । पुनः पुन-रुत्पत्त्यादिधर्मैर्युज्यमानमित्यर्थः । कथंभूतं जगच्चक्रम् । सनेमि । नेमिशब्दोऽर्धवाची । इह जगति प्रकृतिः पुरुषश्चार्धे विद्येते । तदंशत्वेन जडाजडप्रपञ्चौ नेमिनौ । ताभ्यां सहितं कृत्स्नं जगत् सनेमि । नेमिभिर्नेतृभिः परिच्छिन्नैः संकुचद्भिर्जीवैः सह वर्तमानं जगदित्यर्थः । अन्ये त्वाहुः—रथनेमिरिव जडप्रपञ्चस्योपरि स्थितश्चेतनप्रपञ्चो नेमिः । तेन युक्तं जगच्चक्रम् । अजरं अनश्वरम् । आत्मज्ञानासद्भावे इति शेषः । अनेन जगच्चक्रस्य प्रवाहनित्यतोक्ता । विवावृते विवर्तते । विवर्तोऽयं प्रपञ्चो न परिणाम इत्यर्थः । विवर्तनिवृत्तिहेतुं कथयति । उत्तानायां ऊर्ध्वब्रह्मविद्यायाम् । उत् ऊर्ध्वं आत्मानं तनोति इति उत्ताना ब्रह्मविद्या । निमित्तसप्तम्येषा । अविद्यानिवर्तकब्रह्मवि-द्योत्पत्त्यर्थं इत्यर्थः । आत्मानुसंधानसिद्ध्यर्थं दशसंख्याका युक्ता योगा वहन्ति निर्वहन्ति अनुवर्तन्ते । निर्वहणीयानुवर्तनीया इत्यर्थः ।

श्रवणं मननं सिद्धिर्यमो नियम आसनम् ।
प्राणायामः प्रतिक्षेपो धारणं च समाधयः ।
दश योगा इमे ब्रह्मविद्याया हेतवः स्मृताः ॥

इति ।

भक्तिरेकैव शक्तेति परे प्राहुर्मनीषिणः ।

इति पञ्चरात्रे । तदा च सूर्यस्य परमात्मनश्चक्षुः ज्ञापकं ज्ञानं एति आगच्छति । तत्पूर्वं संशयविपर्ययासंभावनामलेन आवृतमा छादितं अनुद्भूतमासीत् । तस्मिंश्चक्षुषि ज्ञापके ज्ञानेऽर्पिता अर्पितानि विलीनानि भवन्ति भुवनानि जगन्ति विश्वा सर्वाणि । कल्पस्तु—

नित्यः प्रवाहेण जगद्विवर्तस्तं धीर्निहन्यादृशयोगजन्या ।
स्वीया मतिः स्याज्जरसावृता या प्रागत्र सर्वं भ्रमतामुपैति ॥

इति ॥

**साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।**
**तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥१५॥**

**साकंजानां** एकस्मादादित्यात् महोत्पन्नानां सप्तानामृतूनां मध्ये **सप्तथं** सप्तममृतुम् । थट् च छन्दसि—इति थट् । **एकजं** एकेनोत्पन्नं **आहुः** कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड्तवो भवन्ति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मन्तव्यम् । अस्ति त्रयोदशो मास इत्याहुः—इति श्रुतेः । तदेवोच्यते—**षट् इत् यमाः** । इच्छब्द एवकारार्थः । षडेव ऋतवो मासद्वयरूपाः । **ऋषयः** गन्तारः । ते च **देवजाः** देवादादित्याज्जाताः **इति** इत्येवं आहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः ।

निःसूर्योऽप्यधिको मासो मण्डलं तपते रवेः ।

इत्यादिस्मृतेः । तस्मात् षडेव देवजाः अदेवज एकः । **तेषां** ऋतूनां स्वरूपाणि **इष्टानि** सर्वलोकाभिमतानि **धामशः** तत्तत्स्थाने **विहितानि** पृथक् पृथक् स्थापितानि । **रूपशः** रूपभेदेन **विकृतानि** विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः—स रसमह वसन्ताय प्रायच्छद्यवं ग्रीष्माय—इत्यादि । **स्थात्रे** अधिष्ठात्रे तदर्थाय **रेजन्ते** चलन्ति । जगद्व्यवहाराय पुनः पुनरावर्तन्ते इत्यर्थः ॥

१५. साकंऽजानाम्—एकऽजम्—देवऽजाः-विऽहिता—निधामऽशः—
विऽकृतानि—रूपऽशः—इति पदपाठः ।

पश्चारे—इत्यत्र लिङ्गं वक्तुं प्रसक्तम् । सनेमि—इत्यत्रानुप्रसक्तं स्थूलशरीरं विविच्योच्यते इति लिङ्गमाहुः साकंजानाम्—इति । साकं देहेन्द्रियादिभिः सार्धं जायमानं इव अनं ब्रह्म यस्मिन् तम् । नेदं षष्ठीबहुवचनान्तं पदम् । बहुव्रीहौ स्वरानुपपत्तिरिति चेत्—परादिश्छन्दसि बहुलम्—इति सूत्रे स्वरस्य व्यत्ययं सर्वत्र छन्दसि

स्मरन्ति। तत्पक्षे अर्थो दुर्योज्यः। सप्तथम्। पथ गतौ। पलोपश्छान्दसः। सप्तापि लोकान् पथति गच्छतीति सप्तथम्। केचिदत्र सप्तशब्दात् पूरणार्थे थट् च छन्दसि—इत्याहुः। तत्र स्वरार्थौ अनुपपन्नौ स्याताम्। एकजं कारणशरीरात् परं लिङ्गं तु तेनैव जायते इत्येकजम्। द्वाभ्यां जायते इति द्विजं स्थूलशरीरम्। अथ लिङ्गदेहावयवानाह। षट् इत् षडेव। यमा ज्ञानकर्मेन्द्रियरूपेण युगलरूपाः शब्दाद्या इन्द्रियार्थाश्च। तथाहि। आकाशजं श्रोत्रं वाक् च। वायुजं त्वक्पाणी। तेजोजं चक्षुः पादम्। अब्जं रसनोपस्थम्। भूजं घ्राणपायू। उभयेन्द्रियात्मकमनेकभूतजं मनः। एवमेकादशेन्द्रियाणि भवन्त्युक्तानि। ऋषयः प्राणाः। प्राणा वाव ऋषयः—इति श्रुतेः।

अहं महान् प्रधानं च देवत्रयमुदाहृतम्।
जा इत्यपत्यनामोक्तिस्तन्मात्राः पञ्च देवजाः॥

इति प्रशंसायामुक्तम्। तेषां यमादीनां लिङ्गावयवानाम्। इष्टानि। इषु गतौ। इषु इच्छायाम्। इष आभीक्ष्ण्ये—इत्यस्मादधिकरणे निष्ठा। अधिकरणवाचिनश्च—इति षष्ठी। एषणस्थानानि विषयरूपाणि गन्धादीनि विहितानि विधिप्रतिपादितानि चेत्। धामशः धामनि धामनि स्वर्गादिके स्थाने स्थाने वैदिके ज्ञाने ज्ञाने वा रेजन्ते उपयुज्यन्ते। स्थात्रे स्थायिने। स्थिरं स्थातारमात्मानं मोचयितुम्। क्रियार्थोपपदस्य च कर्मणि स्थानिनः—इति चतुर्थी। तानि चेद्विकृतानि काम्यानि वा निषिद्धानि वा। रूपशः रूपं रूपम्। अनेकदेहग्रहणमित्यर्थः। रेजन्ते उपयुज्यन्ते स्थातारमात्मानं बद्धुम्। कल्पस्तु—

यत् पञ्चविंशात्मकमस्ति लिङ्गं सार्धं जनं सप्तथमेकजं च।
यो द्वादशस्तद्विषयाश्रितश्चेत् तुर्यं पदं नो यदि तद्विरुद्धम्॥

इति॥

**स्त्रियः॑ स॒तीस्ताँ उ॑ मे पुं॒स आ॑हुः॒ पश्य॑दक्ष॒ण्वान्न वि चे॑तद॒न्धः।**
**क॒विर्यः पु॒त्रः स ई॒मा चि॑केत॒ यस्ता वि॑जा॒नात् स पि॒तुष्पि॒तास॑त्॥१६॥**

**मे** मदीया दीधितयः **स्त्रियः** संस्त्यानवत्यो योषितः। **सतीः** सत्यः। योषिद्वदुदकरूपगर्भधारणात् स्त्रीत्वम्। एषां रश्मीनां आविष्टलिङ्गत्वात् स्त्रीलिङ्गता। **तान् उ** तान् रश्मीनेव **पुंसः आहुः**। प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः। प्रीतिनिर्देशापेक्षया पुंलिङ्गता। अमुमर्थमत्यन्तनिगूढं **अक्षण्वान्** ज्ञानदृष्ट्युपेतः

कश्चिन्महान् **पश्यत्** जानाति । **अन्धः** अतथाभूतः स्थूलदृष्टिः **न वि चेतत्** न विचेतयति न जानाति । किंच **यः कविः** क्रान्तदर्शी **पुत्रः** स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः पुरु जगतां त्राता वृष्ट्युदकलक्षणः **अस्ति । स ईं** स एव पुत्रः । यद्वा ईं एनमर्थं स्त्रीणां सतीनां पश्चात् पुरुषभावं **आ चिकेत** सर्वतो जानाति । पित्रोः स्थितिं पुत्र एव जानाति नान्यः । **यः** कश्चित् **ता** तानि **विजानात्** स्त्रीपुरुषपुत्ररूपाणि जानीयात् **सः पितुः पिता असत्** । पिता वृष्ट्या जगत्पालको रश्मिसमूहः । तस्यापि पिता आदित्यः स भवति । आदित्य एव भवतीत्यर्थः । यद्वा लौकिकोक्तिरियम् । यस्तानि जानाति स एवं भवति । स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति । पुत्रपौत्रादिसहितश्चिरकालं जीवी भवति । इत्यधिदैवतम् ।

अथाध्यात्मम् । या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आहुर्लौकिकाः तानु तानेव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः । कथमन्यस्यान्यभावः । उच्यते । एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः । श्रूयते हि—त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी—इत्यादि । स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति । श्रुतिरपि तदभावं बोधयति—

> नैव स्त्री नपुमानेष नैव चायं नपुंसकः ।
> यद्यच्छरीरमादत्ते तेन तेन स चोद्यते ॥

इति । द्वितीयः पादः पूर्ववत् । किंच पुत्रो वयसाल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात् ईमिममर्थं स विचिकेत जानाति । एवमुक्तलक्षणस्य परमात्मनः ता तानि स्त्रीपुंस्त्वादीनि यो विजानात् औपाधिकानि जानीयात् सः पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पितासत् पितृवत् पूज्यो भवति । उक्तमर्थमभिप्रेत्य ताण्डकब्राह्मणम्—शिशुर्वा अङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् । स पितॄन् पुत्रका इत्यामन्त्रयत—इत्युपक्रम्य—ते देवानपृच्छन्त । ते देवा अब्रुवन् । एष वाव पिता यो मन्त्रकृत्—इति । मन्त्रद्रष्टुरेव किल पितृत्वम् । तत्त्ववित् पितुः पितासदिति किमाश्चर्यमित्यभिप्रायः ॥

१६. ऊं इति—अक्षण्ऽवान्—विऽजानात् – इति पदपाठः ।

पूर्वजन्मनि सिद्धानां स्त्रीणां अन्धादीनां च अत्राधिकार उच्यते। उकारोऽत्र पूरणार्थः। अयमर्थः कुतो ज्ञेयः। गुरोश्चेत् स हि को गुरुः। इह ब्रवीतु—इति मन्त्रोक्तं गुरुलक्षणं पुत्रेष्वभिचरितम्। इत्यत्रोच्यते। ननु स्त्रीणां नात्राधिकारः। कथम्।

स्त्रीणां शूद्रान्धपङ्गूनां बधिराः पतिताश्च ये।
क्लीबानां नैव काणानां वेदविद्याधिकारिता॥

इति वृद्धमनुस्मरणात्। अत्र श्रुत्या उत्तरमुच्यते। उ अपि मे मम ब्रह्मवित्त्वेन परमात्मनः सतीः संबन्धिनीः आत्मविद्याप्रवणाः स्त्रियोऽपि तानत्यन्तोत्कृष्टान् पुरुषानाहुः। लौकिकं स्त्रीत्वं ब्रह्मविद्याविषये आतिदेशिकेन पुंस्त्वेन श्रौतेन बाध्यते। अतः सा स्मृतिः ब्रह्मविद्येतरविषया एव।

गोधादियोषितां स्त्रीत्वेऽप्यस्ति ब्रह्मणि भागिता।
रुक्मिणीदेवहूतीलादेवक्यो ब्रह्मवित्तमाः॥

इति ममैव ज्येष्ठभ्रात्रा लक्ष्मीधराचार्येणोक्तम्। उक्तं च शङ्खेन—

नोपनीतो नैव ब्रह्मविद्यां व्याहरते शिशुः।
योषितोऽपि न तद्ब्रूयुर्विना तु ब्रह्मवादिनीः॥

इति। चन्द्रिकाकारोऽप्याह्निके एवमेवोक्तवान्—तत् ब्रह्मवादिनीव्यतिरिक्तविषयम्—इत्यादिना ग्रन्थेन। विज्ञानेश्वरेणापि प्रव्रजितागमने प्रायश्चित्तातिशयं ब्रुवता प्रव्रजितानां स्त्रीणां अधिकारः सूचितः। प्रव्रज्यायास्तु ब्रह्मविद्या मा भूदिति विरुद्धं वचनम्। अस्ति चात्रैतिह्यम्—श्रीशङ्कराचार्यः स्वमात्रे ब्रह्म उपदिष्टवान्। तदर्थमात्मबोधाख्यो ग्रन्थश्च विरचितः। न च स्त्रियो नोपदेश्याः—इत्यस्ति श्रुतिः। श्रवणनिषेधाभावात् मुमुक्षादिदशासंभवाच्च। तदुक्तम्—

यथाधिकारः श्रौतेषु योषितां कर्मसु स्मृतः।
एवमेवानुमन्यस्व ब्रह्मणि ब्रह्मवादिताम्॥

इति यमस्मृतिः। तस्मात् स्त्रीणामप्यस्ति ब्रह्मविद्यायामधिकारः। एवं जात्यन्धस्यापि इत्याह। पश्यत् पश्यति चेत् ब्रह्म। अक्षण्वान् चक्षुष्मानेवासौ। ब्रह्मविद्यायां जात्यन्धनियमनिर्बन्धो नास्तीत्यर्थः। एतमेवार्थं व्यतिरेकेणाह। न विचेतत् ब्रह्मविद्यां न वेत्ति चेदन्ध एवासौ। अत एवात्रेदं कैश्चिदुक्तम्—

स्त्रीणां यत्र स्मृतौ ब्रह्मविद्यायाः प्रतिषेधनम्।
दुष्टं तत्स्मरणं यद्वा मन्त्रादिर्विषयो भवेत्।

इति। एवं चिकित्वान् इत्यत्रोक्तं लक्षणं स्त्र्यादिष्वभिचरितं इत्युक्तम्। गुरौ लभ्ये सति स्त्रीणामप्युपदेश्यत्वात्। अतः—इह ब्रवीतु—इति मन्त्रोक्तं गुरुलक्षणं पुत्रेष्वभिचरितं इति। अत्रोच्यते।

पितुः पुत्रो गुरुर्यत्र पत्युर्भार्या गुरुस्तथा।
आचार्यस्य गुरुश्छात्रस्तत्र धर्मः प्रणश्यति॥

इति विरोधो दृश्यते इति चेत् न। एषापि निषेधस्मृतिसदृशी नोपेया। अथवा मन्त्रादिविषया न ब्रह्मविद्यादिविषया। कविस्तत्त्वज्ञः यः पुत्रः स इह ईं इदमात्मतत्त्वम्। आचिकेत आज्ञापयति इति स गुरुः स्यादेव। ज्ञापको हि गुरुः। ज्ञानेनैव ज्ञापयति। पुत्रत्वात् पितरं प्रत्यनुपदेष्टृत्वमिति चेत् तत्राह। यस्तावदात्मतत्त्वं विजानाति स पितुरपि पिता भवति। लौकिकं पुत्रत्वं ब्रह्मविद्याविषये आतिदेशिकेन पितृत्वेन श्रौतेन बाध्यते। अत एवोपनिषदि श्रूयते—कामं पित्रे वाचार्याय वा शंसेदात्मन एवास्य तत् कृतं भवति—इति। हरिवंशेऽपि—

पुरा ह्यधर्मादिविनष्टसंज्ञा देवास्तमर्थं तनयानपृच्छन्।
ज्ञानेन सम्यक् परिगृह्य हस्ते तान् पुत्रकाः शंसतमित्यवोचन्॥

इति। आहुश्च सर्वज्ञजगदाराध्यसंप्रदायाधिकारीत्युक्ततिलकभूता योगनिष्ठाः—

देवहूत्यै हितः पुत्रः कपिलस्तत्त्वमूचिवान्।
पितरं चाह कृष्णोऽपि तस्मात् पुत्रो गुरुर्भवेत्॥

इति। ननु अपशूद्राधिकरणे उपनयनाभावेन अध्ययनाभावान्न शूद्रो ब्रह्मविद्यायां अधिकारी इत्युक्तम्। शूद्रसमैव ब्राह्मणादीनामपि स्त्री उपनयनादिरहिता। स्त्रीशूद्रसाम्यात्। शूद्रस्य वेदमुपश्रृण्वतः त्रपुजतुभ्यां कर्णपूरणमपि स्मर्यते। अस्ति च प्रसिद्धिः—स्त्रीशूद्रवर्जमधीष्व इति युक्तम्—इति। अन्या चास्ति स्मृतिः—

न ब्रह्म व्याहरेद्योषिद्बालः शूद्रोऽपजातिकः।
व्याहरन्त इमे दण्डया राज्ञा सन्मार्गरक्षिणा॥

इति। अपजातिको नाम ब्राह्मणब्रुवको भ्रष्टो गोलकादिश्च उच्यते। अपशूद्राधिकरणात्। कथं तर्हि विदुरादीनां ब्रह्मविद्याधिकारो दृश्यते इत्याक्षिप्य उत्तरमुच्यते। आत्मज्ञानसिद्धानामधिकारो न विचार्यते इति।

प्राग्जन्मवासनाजन्यब्रह्मज्ञानप्रवृत्तयः।
आज्ञानशुद्धा इत्युक्तास्ते ब्रह्मण्यधिकारिणः॥

इत्यैतिह्यपठितं पुराणवचनम्। अत्र चाभिप्रायो वर्णितः। अपशूद्राधिकरणभाष्यस्य मा भूच्छ्रौतोऽधिकारः। इतिहासव्यासपुराणादिमूलस्तु भविष्यति। अस्ति च पुराणादिष्वप्युपदेष्टव्यं तत्त्वमस्यादिवाक्यम। तत्तु वेदस्वरूपं न वेदः। आहुश्च भट्टाचार्याः—

तानेव वैदिकान् शब्दान् भारतादिनिवेशितान्।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुज्यते॥

इति। महाभारते च—

श्रुतिभिर्बोधयेत्कांश्चित् पुराणादिगिरापरान्।
पूर्वार्यवचसा कांश्चिल्लौकिक्या च गिरापरान्॥
यत्र यस्याधिकारोऽस्ति तं तेनैव प्रबोधयेत्।
न चोपेक्षेत संप्राप्तं मुमुक्षुं ब्रह्मवित् क्वचित्॥

इति। नृसिंहमन्त्रराजकल्पे तु श्रौत एवाधिकारो दर्शितः—

नृसिंहब्रह्मविद्यायां निर्गुणस्य परात्मनः।
अधिक्रियन्ते शूद्राश्च स्त्री चापि शरणागता॥

इति। न च—

तस्माच्छूद्रो न वक्तव्यः।

इति श्रुतिविरोधात् शूद्रस्याधिकारं ब्रुवन्नयं कल्पः प्रमाणं न स्यात्। श्रुतेर्यज्ञैकविषयत्वात्। कल्पस्तु ब्रह्मविषयः। ननु यदा—निषादस्थपतिं याजयेत्—इति वचनान्निषादस्यापि यज्ञाधिकारः। यथा वा—एह्येवा इदं मधु इदं मधु इमं तीव्रं सुतं पिब—इत्यारभ्य खण्डसमाप्तिपर्यन्तेन ग्रन्थेन दासानां वेदवाक्यविषये श्रवणं पाठश्च दर्शितः। नापितस्य च यथा श्रवणशीतोष्णामन्त्रश्रवणं तथा च शमितृश्रवणं पत्नीवाचनं पत्नीजपः। तथा चाथर्ववेदिनाम्—अर्यमणं नु देवम्—इत्यादौ विशेषे कन्यां वाचयति तथैव ब्रह्मविद्यायां श्रौत एवाधिकारो भविष्यति शूद्रस्यापि। मैवम् निषेधस्य बलीयस्त्वात् अनेकश्रुतिविरोधाच्च। अत्यन्तशूद्रप्रायस्यापि जातिमात्रोपजीविनः स्त्रीवन्मूढस्यापि श्रद्धानस्य ब्राह्मणस्य बोधकोऽयं मन्त्र इति द्योत्यते। तस्माच्छूद्रजातेरधिकारो नास्ति श्रौते। यदुक्तं नापितादेः श्रवणं तत् तावन्मात्रमन्त्रविषयनियतम्। मा भूच्छूद्रस्य श्रौतपूर्वोऽधिकारः। ब्राह्मणस्त्रीणां तु न विरुध्यते। श्रुतिश्रवणनिषेधस्तासां नास्ति। श्रुतिपाठाभावेऽपि श्रुत्यर्थावधारणपक्षोऽस्त्येव। को नाम विरोधः। स्त्रीवर्ज्याध्ययनभावस्तु ऐतिह्यमात्रम्।

नावेदविद्भ्यः पठनीयमेतत् पुराणरत्नं पुरुशासनस्य ।
नाभक्तशिष्याय न नास्तिकेभ्यो दत्तं हि यत्तन्निरयं ददाति ॥

अयं निषेधस्तु नत्प्राधान्येन आनुषङ्गेन । श्रीभागवते तु—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एव भवेदिति ॥

इति । भागवताख्याने पुराणमूलोऽधिकारी दर्शितः । तथाच श्वेताश्वतरे द्वितीयाया मन्त्रोपनिषदि तु—

ज्ञानं श्रुत्वा ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं तत्परेशो ह नित्यं न श्रद्धिनं जन्ममृत्यू हरेताम् ॥

इति । शिवधर्मोत्तरे—

यस्तु वर्णावकृष्टः स्यान्नारी वा धर्मचारिणी ।
तावप्येतेन योगेन गच्छेतां परमां गतिम् ॥

इति । भगवद्गीतासु च—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

इति । एकादशस्कन्धे च—

स्त्रियो वैश्यास्तथा शूद्रास्तेऽनुकम्प्या भवादृशाम् ।
अनन्यशरणास्ते हि श्रद्धा येष्वपि दृश्यते ॥

इति । याज्ञवल्क्योऽपि—

भूतात्मनस्तपोविद्ये ज्ञानं बुद्धेर्विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

इति । ब्रह्मोपनिषत्परिशिष्टेऽपि—

नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन हि लक्ष्यते ॥
तस्मात् सर्वे विजानीयुरात्मानं विश्वरूपिणम् ।
आचार्यश्चेत् परं ब्रह्म ब्रूयान्मुच्यन्त एव ते ॥

इति । वासिष्ठरामायणे च—

श्वपचः प्राह चण्डालः प्रश्नं कर्कटिकां प्रति ।

परं ब्रह्म ततोऽस्त्वेव स्त्रीणां ब्रह्माधिकारिता ॥

इति। स्कान्दपुराणे कालिकाखण्डे पञ्चदशे मुक्तिखण्डे विष्णुं प्रति शिवो ब्रह्मक्षत्रविशां श्रेष्ठमध्यमादीनां गुरुत्वं प्रतिपादयन्नाह—

ब्रह्मणश्चापि विप्रस्य क्षत्रियस्य तथैव च।
विशः शूद्रस्य शुश्रूषोर्गुरुः स्याद्योषितामपि ॥
शूद्राणां च तथा स्त्रीणां गुरुत्वं न कदाचन।
गुरुत्वं केचिदिच्छन्ति नोत्तमं प्रति केशव ॥

इति। विष्णुरहस्ये च—

कात्यायिनी च मैत्रेयी गार्गी वाचक्नवी तथा।
एवमाद्या विदुर्ब्रह्म तस्मात् स्त्री ब्रह्मविद्भवेत् ॥

इति। एतेन यत्तैत्तिरीयैरुक्तम्—पुंसामप्यपरिव्राजकानां ब्रह्मविद्यायामनधिकारः—इति तदप्यपास्तम्। अपरिव्राजकानां स्त्रीणामिव पुरुषाणामप्यधिकारः कैमुत्यवादप्रसिद्धः। तदुक्तं ब्रह्मगीतायाम्—

श्रुतौ स्मृतौ वा परमार्थवेदिनः श्रुता न ते वै यतयः प्रसिद्धाः।
संन्यासिनो ये परमार्थवेदिनो गार्हस्थ्यधर्मा बहवो विमुक्ताः ॥
तस्माद्ब्राह्मणमात्रस्य ब्रह्मविद्याधिकारिणः।
उपदेश्ये गुरौ वापि नात्र वर्णाश्रमादरः ॥

इति। साधनचतुष्टयसंपन्नस्तावदधिकारी। कथम्। श्रुतिभिर्बोधयेत् कांश्चित्—इति व्यवस्थया सर्वेषां श्रवणमपि घटते। गृहस्थाद्यधिकारसमर्थनं सप्रपञ्चमद्वैतसिद्धौ द्रष्टव्यम्। विस्तरभयान्नेह लिख्यते। कल्पस्तु—

पुंवदन्धश्च योषिच्च ब्रह्मविद्याधिकारिणौ।
श्रद्धिनो ब्रह्मवित् पुत्रो गुरुः स्यात् पितरं प्रति ॥

इति ॥

**अ॒वः प॒रेण॑ प॒र ए॒नाव॑रेण**
**प॒दा व॒त्सं बिभ्र॑ती॒ गौरुद॑स्थात्।**
**सा क॒द्रीची॒ कं स्वि॒दर्धं॒ परा॑गा॒त्**
**क्व॑ स्वि॒त् सू॑ते न॒हि यू॒थे अ॒न्तः ॥ १७ ॥**

अत्राग्नौ हूयमानहविर्गोरूपेण स्तूयते । **गौः** गोरूपा गमनशीलैषाहुति-सङ्घेन पोष्यं **वत्सं** वत्सस्थानीयमग्निं **अवः** अधस्तादधोदेशे **परेण पदा** पादद्वयेन स्वावयवेनाकृष्य **बिभ्रती** धारयन्ती । तथा **पुरः** परस्तादुपरिदेशे **एना** अनेन **अवरेण** च पदा पादद्वयेनाकृष्य तमेव वत्सं बिभ्रती **उत् अस्थात्** सूर्यं प्रत्युत्तिष्ठति ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।

इति स्मृतेः । अथैवं कृतवती **सा** आहुतिः **कद्रीची** क्व गतेत्यनिश्चयगमना । आदित्यं प्राप्तवती इत्यर्थः । **कं स्वित्** कं फलभाजं पुरुषं प्रति **अर्धं** अर्धमार्गमागत्य । यद्वा अर्धमृद्धं **परां अगात्** परागच्छति । आगत्य च **क्व स्वित् सूते** कुत्र प्रदेशे फलमुत्पादयति । **नहि** इतरगोवदियं **यूथे अन्तः** सजातीयगोमध्ये सूते साधारण्येन यत्र क्वचित् सूते । अपि तु कस्मिंश्चिदनुष्ठातरि । अतः स महान् को नु स्वित्—इति । यद्वा आदित्यरश्मिसमूह एव गोरूपेण स्तूयते । गौरुक्तलक्षणा रश्मिरूपा गौर्वत्सं वत्सवद्रक्षणीयं यजमानमुक्तक्रमेण बिभ्रती उदस्थात् । अथ तथा कृत्वा सा कद्रीची अदृश्यगमना सती कं स्विदर्धमृद्धमर्धस्थानभाजं वा कंस्वित् पुरुषमादित्यं परागात् । अप्रतिनिवृत्ता गता । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः—इति श्रुतेः । तथा कृत्वा च क्वस्वित् सूते कस्मिन्निन्द्रादिलोके जनयति । न सर्वत्र । शिष्टं समानम् ॥

१७. अन्तरिति—इति पदपाठः ।

ननु कथमुपदेशः कर्तव्यः । किं त्वंपदार्थानुवादेन तत्पदार्थोपदेशः तत्पदार्थानुवादेन त्वंपदार्थोपदेशो वा । अत्रेदमुत्तरम । अवः अवरो जीवः । आदावनूद्य परेण ब्रह्मणा योज्य इति शेषः । पश्चात् परमात्मा ब्रह्मा एना अनेन अवरेण जीवेन सह योज्यः । ततो गौः श्रुतिः । पदा पादेन महावाक्यात्मना एकदेशेन वत्सं पुत्रभावमापन्नं शिष्यं बिभ्रती परमात्मस्वरूपेण योजयन्ती । उदस्थात् उत्तिष्ठति उत्कर्षेणास्ते श्रवणमनननिदिध्यासनरूपमुत्कर्षं प्राप्नोति । कार्यकारणभेदविवक्षात्र । सा एव कद्रीची । सा स्वात्मानुभूता । रीङ् गतौ । गतिरत्र नाशः । अञ्चू गतौ । कत् कुत्सितं संसारमशुभं रीयते ध्वसते नाशयति इति परमात्मज्ञानाभ्यासः कद्री । तां अञ्चति गच्छति पूजयति च इति कद्रीची स्वात्मानुभूतित्वात् । टिप्पणकारस्त्वाह—

सनाभिर्ज्योतिरित्यादेरार्पितेति तु वेदतः ।
अक्षण्वानाद् तदुक्तो नुट् कद्रीची विष्वगित्यतः ॥

इति । अस्यार्थः । सनाभिः । इदं पदं समानस्य सभावे । ज्योतिर्जनपद—इति सूत्रेण । यद्वा सहशब्दस्य सभावः । वोपसर्जनस्य—इति । तथा—तस्मिन्नार्पिता भुवनानि—इत्यत्र दीर्घो वेदत्वात् ज्ञेयः—इत्यर्थः । तथा—अक्षण्वान् न विचेतदन्धः—इत्यत्र—छन्दस्यपि दृश्यते—इति आट् । आतो नुट—इति नुट् । कद्रीची । अत्र किं कुत्सितमञ्चति इत्यर्थे—आ सर्वनाम्नः—विष्वग्देवयोश्च टेः—इति अद्र्यादेशः । अञ्चतेश्चोपसंख्यानम्—इति ङीप् । अचः—इति अतो लोपः । चौ—इति दीर्घः । अर्थस्तु स एव । कमप्यर्धं भागं लक्षणयावशेषितं अंशं कमपि जडरूपमंशं पराकृत्य आगात् आगच्छति अनुभवति । ननु यद्यपि भागलक्षणया स्वस्य चिदंशग्रहणेन अङ्गत्याग उक्तः तथापि माया तं जडांशं पुनरपि उपेक्षते सूते—इति चेन्न । क्व स्थाने जडांशं सूते पुनः । न हि स्वित् स्वात्मनि । प्रणष्टत्वात् । नाप्यात्मनि नापि कारणे । तस्य निरस्ताविद्यत्वात् । अथ कारणादियूथे तदपि न इत्याह—न हि यूथे अन्तः—इति । ईशमायाभिप्रायेणैतदुक्तं भवति न जीवमायाभिप्रायेण । जीवमायानाशे सति कुण्ठितशक्तिरीशमाया क्व संसाररूपं जडांशं सूते चित् । नात्मनि नाप्यात्मदेहेन्द्रियादियूथे । जीवमायांशेन तस्या अपि निर्मूलत्वेन नष्टप्रायत्वात् । कल्पस्तु—

त्वमर्थमुक्त्वा परमेश ईर्यः पश्चात्तयोर्व्युत्क्रम ईरणीयः ।
तदर्धपक्षेण जडांशहन्त्री दृष्ट्वा श्रुतिं भीतिमुदास माया ॥

इति ॥

**अ॒वः परे॑ण पि॒तरं॒ यो अ॑स्यानु॒वेद॑ प॒र ए॒नाव॑रेण ।**
**क॒वी॒यमा॑नः॒ क इ॒ह प्र वो॑च॒द्देवं मनः॒ कुतो॒ अधि॒ प्रजा॑तम् ॥ १८ ॥**

**अ॒वः** अवस्तात् स्थितं **अ॒स्य॒ पि॒तरं॑** एतल्लोकपालमग्निं **परे॑ण** आदित्येन सह **यः अ॒नु॒वेद॑** अनुक्रमेण जानाति । तथा **प॒रः** परस्तात्स्थितमादित्यं अस्य पितरं पालकम् । सोऽपीममेव लोकं वृष्ट्यादिना पालयति । तादृशमादित्यं **ए॒ना** अनेन **अव॑रेण** अग्निना सह योऽनुवेद अग्न्यादित्यौ व्यतिहारेणोपास्ते । यद्वा अभिभूतरजस्तमस्कावुद्बुद्धसत्त्वौ अत एव स्वाधीनमायौ एतौ एकत्वेन वाधिगच्छतः । स तादृशः पुरुषः **क॒वी॒यमा॑नः** कविवदाचरन् क्रान्तदर्शित्वमात्मनः ख्यापयन्

**कः इह** अस्मिन् लोके **प्र वोचत्** प्रब्रवीति । किं च **देवं** द्योतमानं देवविषय- मलौकिकं वा **मनः कुतः** कस्माददृष्टविशेषात् **अधि** आधिक्येन **प्रजातं** उत्पन्नम् । उभयमपि दुर्लभमित्यर्थः ॥

१८. अनुऽवेद-कविऽयमानः-प्रऽजातम्—इति पदपाठः ।

पूर्वमन्त्रोक्तव्यतिहारं जानन्नेव गुरुर्दैवतमित्युच्यतेऽनेन मन्त्रेण । अवः अवरो जीवः परेण परमात्मना योज्यः इति शेषः । पश्चात् परे एना अनेनावरेण योज्यः इति शेषः । अस्य जगतः पितरं ईश्वरमनु अनुक्रमेण आचार्योपदेशक्रमेण यो वेद वेत्ति स एव कवीयमानः कवींस्तत्त्वज्ञान् शिष्यान् आत्मने इच्छन् । शानच्प्रत्ययः । स्वर- स्त्वनुसर्तव्यः । कविमिव ब्रह्माणमिवात्मानमाचरन् । कविर्ब्रह्मा । स इवाचरतीति विग्रहः । आचरतीत्याचार्यः ।

आचार्यो ब्रह्मणो मूर्तिः ।

इति श्रूयते । न चैवं वाच्यं एवंविधा गुरवः सुलभाः इति । यथावसरस्तूपदेशः । नात्र त्वरणीयं इत्यत आह—क इह प्रवोचत् देवं कः दुर्लभः पुरुषः इह ब्रह्मविद्यायां प्रवक्ष्यति तं देवं परमात्मानम् । वक्तरि लब्धे श्रोता स्यात् । तथा श्रोतरि सति वक्ता स्यात् । यतः श्रोतापि दुर्लभ इत्याह । मनः चित्तं अधि अधिकं शुद्धं कुतः कारणाज्जातं भवेत् । तत्र कारणं सत्कर्मादि । तत्तु दुरनुष्ठानम् । शुद्धान्तःकरणस्यैव अध्यात्मश्रवणं निर्वहतीति श्रोतापि दुर्लभ इत्यर्थः । कल्पस्तु—

यो वेद देवं व्यतिहाररीत्या सोऽयं गुरुर्ब्रह्मसमः प्रसाध्यः ।
पुण्यैरतो वक्तरि शिष्यभावं प्रायात् स शिष्ये सति वक्तृभावम् ॥

इति । प्रायादिति संबध्यते ॥

**ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उं अर्वाच आहुः ।**
**इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥१९॥**

**ये** सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परिभ्रमणवशेन **अर्वाञ्चः** अर्वागञ्चना अधोमुखाः सन्ति **तान् उ** तानेव **पराचः आहुः** पराङ्मुखाञ्चना- नूर्ध्वानाहुः कालविदः । तथा प्रथमं **ये पराञ्चः** परागञ्चनाः **तान् उ** तानेव

**अर्वाचः आहुः** । हे **सोम** त्वं **इन्द्रः** परमेश्वरः इरां भूमिं वृष्टया धारक आदित्यः । यद्वा द्वादशादित्यानां मध्ये इन्द्रोऽप्येकः । विवस्वदिन्द्रयुताः—इत्युक्तत्वादयमपीन्द्रः । स **च** युवां **या** यानि मण्डलपरिभ्रमणानि **चक्रथुः** कृतवन्तौ **तानि रजसः** रञ्जनात्मकस्य लोकस्य । कर्मणि षष्ठी । लोकं **वहन्ति** निर्वहन्ति । तत्र दृष्टान्तः । **धुरा** शकटादौ धुरि **युक्ताः न** अश्वादयो यथा धुरं वहन्ति तद्वत् । यद्वा एतत् पूर्वार्धे दृष्टान्तितम् । धुरा युक्ताः । धुरि स्थितं चक्रमपि धूर्शब्देनोच्यते । तत्र युक्ताः समर्पिताः पुरुषास्तत्परिभ्रमणवशेनार्वाञ्चोऽपि पराञ्चः पराञ्चोऽप्यर्वाञ्चो भवन्ति तद्वत् ॥

१९. ऊं इति-ऊं इति—इति पदपाठः ।

ब्रह्मविद्येतरमन्त्राद्युपदिष्टानां ब्रह्मलोकप्राप्तावपि पुनरावृत्तिरित्यनेनोच्यते । ये अर्वाञ्चो मनुष्या मन्त्राद्युपासकाः तान् उ एव पराचो ब्रह्मलोकादिगामिनः आहुः । ये पराञ्चो ब्रह्मलोकादिस्थाः तान् अर्वाचो मनुष्यानाहुः । ब्रह्मविद्याभावे मन्त्राद्युपदिष्टाः पुनरावर्तन्ते । मन्त्रादौ मनुष्याणामेव अधिकारः इति सूचितम् । ननु मर्त्यलोकस्थान् के ब्रह्मलोकं प्रापयन्ति । के वा ब्रह्मलोकस्थान् मर्त्यलोकं प्रापयन्ति । किं कर्माण्येव इत्यत आह—इन्द्र ईश्वरः प्रयोजककर्ता त्वं च भो सोम सुन्वन् कर्मिन् प्रयोज्यकर्तः युवा या यानि कर्माणि चक्रथुः कृतवन्तौ स्थः तानि कर्माणि धुरा अग्रेसरेण लिङ्गशरीरेण युक्ता युक्तानि रजसः मनुष्यलोकान् वहन्ति ब्रह्मादिलोकं प्रापयन्ति । रजसो ब्रह्मलोकाद्वा वहन्ति मर्त्यलोकं प्रापयन्ति । धुरा न युक्ता यथा रथस्य धुरा युक्ता अश्वास्तं रथं देशाद्देशान्तरं प्रापयन्ति तद्वदित्यर्थः । कल्पस्तु—

> मन्त्रोदिता ये मनुजाः प्रयान्ति ब्रह्मादिलोकानथ ते नृलोकान् ।
> तत्त्वज्ञता यावदिमे भ्रमन्ति कर्माण्यसाधारणकारणानि ॥

इति ॥

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥**

अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते । यथा लोके **द्वा** द्वौ **सुपर्णा** सुपर्णौ सुपतनौ शोभनगमनौ **सयुजा** समानयोगौ **सखाया** समानख्यानौ

**समानं वृक्षं परि षस्वजाते** एकमेव वृक्षं परिषस्वजाते आश्रयतः। **तयोः अन्यः** एकः **पिप्पलं स्वादु** पक्वं स्वादुतरं **अत्ति**। **अन्यः** अपरः **अनश्नन् अभि चाकशीति** अभि पश्यति। तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ। योगो नाम संबन्धः। स च तादात्म्यलक्षणः। स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा। एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः। एवमेकस्वरूपावित्यर्थः। अनेन भास्करमतानुसारिणः— अतिरेकिनाम्नो जीवात्मा परमात्मनो नान्यः। स च परमात्मा जीवादन्यो नानाजीवाश्रयणात्—इति मतं निरस्तं भवति। ननु संबन्धो द्विष्ठः। स च पक्षिणोरेव भेदमपेक्षते। अतः कथमैकात्म्यम्—इति। न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अत एव सखायौ समानख्यानौ नान्यख्यानौ। ननु—एकस्य यादृशं ख्यानं तादृशमेवान्यस्य इति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति। कथं तादात्म्यं उच्यते—इति न वक्तव्यम्। नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनः तदेव ख्यानमितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्नमैकात्म्यम्। अनेन वास्तवभेदोऽपि निरस्तः। समानं वृक्षं परिषस्वजाते इत्यत्र यथा आश्रयान्तरा-भावादुभयोरेकाश्रयत्वमभ्युपगन्तव्यं तद्वत् सयुजा सखायेत्युभयत्राप्येकयोगख्याने आश्रयणीये। वृश्च्यत इति वृक्षो देहः। स चोभयोः समान एक एव। जीवस्य भोगार्थत्वात् परमात्मना सृष्टैर्महाभूतैरारब्धत्वात्तस्योपलब्धिस्थानत्वाच्चोभयोरपि समानः। तादृशं समानं वृक्षं परिषस्वजाते। परिष्वजतः। आश्रयतः। न च—जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकौ—इति वाच्यम्। तयोर्मोहकृतत्वात्। तथा चाथर्वणिका अमुं मन्त्रमाम्नायास्य सन्देहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति—

> समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
> जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥

इति। अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमीश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानो मूढः सन् शोचति। संसारेऽहं कर्ता सुखी दुःखीति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं

परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति तदा वीतशोको देहाद्व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्नस्य महिमानमिति निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञादिमहिमानमिति । एति प्राप्नोति । न च तद्भावानासौ तन्महिमा प्राप्यते । अतस्तद्रूपो भवतीत्यर्थः । तस्माद्वस्तुत एक एव । भेदस्तु मोहकृतः—इति प्रसिद्धम् । अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्योच्यते—तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति भुङ्क्ते । यस्य यदुपार्जितं तत्तस्य स्वादु भवति । अन्यः परमात्मा अनश्नन्नाप्तकामत्वेनाभुञ्जानः । स्पृहाया अभावात् ॥

आप्तकामस्य का स्पृहा ।

इति स्मृतेः । तस्मादवास्तवभेदमुपजीव्य तयोरन्य इत्युक्तम् । वस्तुतस्तु—

अनीशया शोचति मुह्यमानः ।

इत्युक्तत्वादभेद एव । तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत् साक्षित्वेनेक्षते । अत्र —द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ—इत्यादि निरुक्ते गतमस्य मन्त्रस्य व्याख्यानमनुसन्धेयम् ॥

२०. सुऽपर्णा॑ सुऽयुजा॑ सख्या॒या समानम्—इति पदपाठः ।

अतो ब्रह्मविद्यैवाश्रयणीया । सा च अविद्यासिद्धं जीवमनूद्य तत्पदार्थप्रतिपादनममुमर्थं अभिप्रेत्य जीवपरमात्मानौ आह—द्वा सुपर्णा द्वौ साधूनभ्युदयनिःश्रेयसपक्षान् बिभ्रतौ जीवपरमात्मानौ । सयुजा अन्योन्यममुञ्चन्तौ । सखाया परस्परोपकारिणौ । समानं एकं वृक्षं व्रश्चनीयं देहं परिषस्वजाते परित आलिङ्ग्य तिष्ठतः । तयोर्मध्ये एको जीवः पिप्पलं फलसमं बहुदोषयुक्तमपि कर्मफलं स्वादु कृत्वा अत्ति स्वदिति । अन्यः परः परमात्मा अनश्नन् अभुञ्जानोऽपि अभिचाकशीति अभितः अत्यर्थं प्रकाशते । अत्ति इत्यत्र—एकान्याभ्यां समर्थाभ्याम्—इति प्रथमस्तिङ् न निहन्यते । पैङ्गिरहस्योक्तो बुद्धिजीवपक्षोऽप्यविरुद्धः । तत्र सत्त्वं नाम बुद्धिर्जीवोपाधिः । तेन संसारी जीवो लक्ष्यते । परमात्मभावमापन्नस्तत्र जीवो जीवशब्देन विवक्षितो न तु संसारी । स तु परमात्मैव । गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्—इत्येतदधिकरणविषयत्वमस्य मन्त्रस्य प्रतिपादयता श्रीशङ्कराचार्येण एतन्मन्त्रं प्रतिपाद्य विस्तरेण प्रतिपादितम् । कल्पस्तु—

जीवः परश्च प्रतिपादनीयौ जीवः परात्मेति विवक्तुकामैः ।
एकस्तयोः कर्मफलं तु भुङ्क्ते चकाश्यतेऽन्योऽनशनः परात्मा ॥

इति ॥

**यत्रा॑ सु॒प॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति ।**
**इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥ २१ ॥**

**यत्र** आदित्यमण्डले **सु॒प॒र्णाः** सुपतनाः शोभनगमना रश्मयः । **अ॒मृत॑स्य** उदकस्य **भा॒गं** भजनीयमंशमादाय । **अनि॑मेषं** अनवरतम् । **वि॒दथा॑** वेदनेन ज्ञानेन अस्माभिरेवं कर्तव्यमिति बुद्ध्या । **अ॒भि॒स्वर॑न्ति** अभिप्रापयन्ति । यश्च **विश्व॑स्य भुव॑नस्य** भूतजातस्य **इ॒नः** स्वामी । तथा तस्यैव **गो॒पाः** गोपायिता रक्षिता । अयमादित्यः **सः** परमेश्वरो **धीरः॑** धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् । **मा॒** मां **पाकं॑** पक्तव्यमपक्वप्रज्ञम् । **अत्र॑** अस्मिन् स्वकीयमण्डले **आ वि॒वे॒श** प्रवेशयति । अत्रास्मदीये देहे वा नियामकतया प्रविष्टः—इत्यधिदैवतपक्षे ॥

अथाध्यात्मपक्षे—यत्र यस्मिन्नात्मनि सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीनि अमृतस्य भागम् । अत्र विषयावच्छिन्नं चैतन्यममृतमित्युच्यते । तस्य भागं भजनीयं स्वस्वांशं अनिमेषं निमेषरहितं अनारतं विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धानि अभिस्वरन्ति अभिप्रयन्ति आवरणापगमनेन स्फोरयन्ति । किंच यस्तु इनः स्वाम्यस्य देहस्य । विश्वस्य भुवनस्य गोपाः गोपायिता रक्षिता । यद्वा विश्वस्य भुवनस्य भूतजातस्य स्वाम्यस्य देहस्य गोपाः । अनेन तत्त्वंपदार्थयोरेकत्वं प्रतिपादितं भवति । स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाविक्रियः मा मां पाकं परिपक्वमनस्कं यागदानादिनापगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मां आविवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा अपरिपक्वमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीत्यविद्वान् ततः परं अस्ति कश्चित् सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद्गुरुशास्त्राभ्यां स एवाहमस्मीति मत्वा एवं पारंपर्येणावगत्यासंभावनाविपरीतभावेन व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्माभूवं इत्यर्थः । अयमेव—स मा धीरः पाकमत्राविवेश—इत्यनेनोच्यते । नन्वनवच्छिन्नस्य

परमात्मनः सर्वत्र व्याप्तत्वात् प्राप्तिरेव नोपपद्यते । सम्प्रत्यत्र प्राप्तिर्द्विविधा प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति । प्राप्तस्यापि कण्ठे चामीकरन्यायेन आवरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते । अस्य मन्त्रस्य यन्निरुक्तम्—**यत्र** सुपर्णाः सुपतना आदित्यरश्मयः—इत्यादिकं तदत्र द्रष्टव्यम् ॥

कोऽयमत्यर्थं प्रकाशः । तत्रेदमुत्तरम् । सुपर्णा मोक्षपक्षीया जीवाः यत्रार्थे प्रकाशेऽभिव्यज्यमाने सति अमृतस्य आनन्त्यस्य सुखरूपस्य ब्रह्मणः । अनिमेषं अनश्वरं भागं भजनं प्राप्तिम् । विदथा ज्ञानेन वृत्तिलक्षणेन अभिस्वरन्ति । अभिस्वरतिर्गतौ । अत्र ज्ञानमार्गे विघ्ननिरासकः परमेश्वर एव सेव्यमान इत्याह—विश्वस्य सर्वस्य भुवनस्य लोकस्य इन ईश्वर एव ज्ञानमार्गप्रवृत्तस्य गोपाः गोप्ता रक्षकः । गोपायतेः क्विपि यलोपः । कथं भिन्नस्वभावयोरैक्यम् । तत्राह—स इनश्चिन्मात्रांशः । धीरः । धीः इरा अवशिष्यमाणा यस्य स तथा । पाकं प्रशस्तं विगलितासद्द्वितीयत्वादिदोषं चिन्मात्रं सन्तम् । मा मां अत्र वेदने असन्निवृत्तिलक्षणे आविवेश प्रविशति । प्रवेश औपचारिकः । चिन्मात्रयोः जीवपरमयोरैक्यं न विरुध्यते । कल्पस्तु—

ज्ञानेन यत्तेजसि दीप्यमाने ज्ञानस्य गोप्ता भवतीश्वरः सः ।<br>
चिन्मात्रयोरैक्यमितस्तयोः स्यान्नित्यं ततो यात्यमृतस्य भागम् ॥

इति । कल्पे तु प्रथमद्वितीयपादव्याख्या संक्षेपतः कृता ॥

**यस्मि॑न्वृ॒क्षे म॒ध्वदः॑ सु॒प॒र्णा नि॑वि॒शन्ते॒ सुव॑ते॒ चाधि॒ विश्वे॑ ।**<br>
**तस्येदा॑हुः॒ पिप्प॑लं स्वा॒द्वग्रे॒ तन्नोन्न॑श॒द्यः पि॒तरं॒ न वेद॑ ॥ २२ ॥**

अत्र वृक्षस्वरूपकल्पना । अधिदैवमादित्यमध्यात्ममात्मानं च प्रशंसति । **यस्मि॑न्** आदित्ये **वृ॒क्षे** वृक्षवत् सर्वफलाश्रयभूते । **म॒ध्वदः॑** । मध्विवत्युदकनाम । तददन्तीति मध्वद उदकस्यात्तारः । **सु॒प॒र्णाः** सुपतना रश्मयो **नि॑वि॒शन्ते॑** प्रविशन्ति रात्रौ । **सुव॑ते॒ च॒** पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात् । कुत्र । **अधि॒ विश्वे॑** विश्वस्योपरि । **तस्य॑ इत्** आदित्यवृक्षस्य **पिप्प॑लं** पालकं फलं **स्वा॒दु** रसवत् । **अग्रे॑** उपर्युपासनानन्तरं **आ॒हुः** कथयन्ति तत्त्वविदः । यद्वा सर्वस्याध्युपरि वर्तमानमाहुः । ईदृशं **पि॒तरं॑** जगतः पालयितारं **यः** नरः **न वेद॑** नोपास्ते सः

तत् न उत् नशत्। नशतिर्गतिकर्मा। तत् फलं न प्राप्नोति। वेदितुस्तु अग्रे पिप्पलमाहुरित्यर्थः—इत्यधिदेवपक्षे।

अथाध्यात्मपक्षे—यस्मिन् परमात्मनि वृक्षे वृक्षवद्रमनादिरहिते अविक्रिये। सुपर्णाः शोभनगमनानीन्द्रियाणि मध्वदो मधुनो ज्ञानस्यात्तृणि। तत्त्वज्ञानेन ज्ञानभाञ्जि इत्यर्थः। निविशन्ते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तान्यात्मनिवृत्त्या लीयन्ते। पुनः प्रबोधकाले अधि विश्वे विश्वस्योपरि सुवते च उद्यन्ति च। स्वस्वविषयान् लभन्ते इत्यर्थः। तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वाद्वास्वादनीयममृतत्वलक्षणं ज्ञानम्। यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति तद्धि स्वादुतमम्। इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वादापातस्वादूनि। तत् फलमग्रे स्वरूपज्ञानोत्तरकालमाहुः। यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद न जानाति गुरुशास्त्रात् स तत्फलं नोन्नशत् न प्राप्नोति। अत आत्मानं यो वेद स एव तन्मोक्षफलं प्राप्नोतीत्यर्थः। यद्वा चर्मवदाकाशम्—इत्यादिश्रुतेर्ज्ञानादन्योपायस्यामृतत्वप्राप्तिं निवारयति। ब्रह्म वेद ब्रह्मैव भवति—इत्यादिकानुज्ञाप्राप्तिमाह। तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः॥

२२. मधुऽअदः सुऽपर्णाः निऽविशन्ते—इति पदपाठः।

एवं चेत् जीवानां मुक्तिः स्यात् कर्मफलं कनु। कर्मकर्तृत्वे न मुक्ति स्यात्। प्रारब्धं तु न नश्यति। प्राप्ताप्राप्तविवेकेन लिङ्गदेहस्यैव भोक्तृत्वं इत्युच्यते—यस्मिन् वृक्षे व्रश्चनीये लिङ्गशरीरे स्थिताः सुपर्णा जीवाः। मध्वदः कर्मफलभोक्तारः। लोकाल्लोकान्तरं निविशन्ते कर्मफलं भुञ्जते। ऐहिकामुष्मिकफलानि सुवते कुर्वते च। अधि अधिकानि काम्यानि निषिद्धात्मकानि संसारकारणानि। तथा विश्वे सर्वात्मका अमुक्ताश्च भवन्ति। एवं लिङ्गदेहस्थानां जीवानां त्रैविध्यमुक्तम्। तस्य लिङ्गदेहस्य इत एव आहुः। परमार्थतः पिप्पलं कर्मफलं स्वादु स्वदनीयम्। ननु जीवस्य चिन्मात्रतत्त्वज्ञानादेव मुक्तिरस्तु। किमन्तर्गतेन तत्पदार्थज्ञानेन प्रक्रियापरिकल्पितेन। तत्राह—यतोऽग्रे तद्ब्रह्म उत् उत्कृष्टं न नशत् न प्राप्नोत्येव सः यः पितरं जगत्कारणं तत्पदार्थमीशं न वेद न वेत्ति। वैदिकेषु कैवल्युक्तेरप्रामाण्यादिति भावः। कल्पस्तु—

यस्मिन् स्थिता ऐहिकपारलोकं भोगं भजन्ते सुवते कृतीश्च ।
युक्ताश्च तस्यैव कृते न भोगा यो वेद नेशं न हि तस्य मुक्तिः ॥

इति ॥

**यद्गा॑य॒त्रे अधि॑ गाय॒त्रमाहि॑तं**
**त्रैष्टु॑भाद्वा त्रैष्टु॑भं नि॒रत॑क्षत ।**
**यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं**
**य इत्तद्वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥ २३ ॥**

**गा॒य॒त्रे अधि॑ गा॒य॒त्रं** आहितम् । प्राथम्यात् सर्वैः स्तुत्यत्वाच्च गायत्री भूः । तदीयं स्थानं गायत्रम् । अधि उपरि तत्र गायत्रमाग्नेयं पदं **आहि॑तम्** । प्रथमसृष्टत्वात् गायति त्रायते च इति व्युत्पत्त्या च प्रजापतेर्मुखात् गायत्र्या सहोत्पन्नत्वात् भक्त्या अग्निरपि गायत्रः । गायत्रोऽग्निः—इति श्रुतेः । भूम्यामग्निः स्थापित इति **यत्** अस्ति । तथा **त्रैस्तुभात्** द्वितीयत्वाद्वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभयुक्तादन्तरिक्षात् **त्रैस्तुभं** त्रिस्तोभयुक्तं ऊर्ध्वाधस्तिर्यग्लक्षणस्तोभत्रयोपेतं वायुं **नि॒रत॑क्षत** साधु संपादयितवन्तो देवा इति **वा** यदस्ति । **वा** अथवा **जग॑ति** सर्वैर्गन्तव्ये उद्गततमे वा तृतीयभूते द्युलोके **जग॑त्** गमनशीलमादित्याख्यं **प॒दं आहि॑तं** इति **यत्** अस्ति । **तत्** इदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानं **ये इत्** ये एव नरा **वि॒दुः** जानन्ति **ते** एव **अ॒मृ॒त॒त्वं आ॒न॒शुः** अमरणरूपं पदमाप्नुवन्ति इत्यधिलोकम् ।

अथ अधियज्ञम् । गायत्रे प्रातःसवने अधि उपरि गायत्रं छन्दः पदमाहितं इति यत् । तथा त्रैष्टुभात् माध्यंदिनात् सवनात् त्रैष्टुभं छन्दो निरतक्षत तत्राहितमिति यत् । वा । किं च इत्यर्थः । जगति तृतीयसवने जगत् जागतं पदमाहितं इति यत् । तत् तादृशं सवनत्रयेषु छन्दस्त्रयसंस्थानं ये नरा यजमाना विदुः जानन्ति ते अमृतत्वं ज्ञानानुष्ठानद्वारेण मोक्षं आनशुः आप्नुवन्ति । अथवा गायत्रे प्रातःसवने । त्रिषु सवनेषु छन्दस्त्रयपरिमाणात् सवनान्यपि तत्तच्छन्दःशब्देनोच्यन्ते । गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम्—इति श्रुतेः । तादृशे प्रातःसवने अधि उपरि गायत्रं अष्टाक्षरात्मकमाहावप्रतिगररूपं गायत्रं पदमाहितम् । तद्यथा । होता—शोंसावोम्—इति

त्र्यक्षरेण आह्वयते। तथा—शंसामोदैवोम्—इति पञ्चाक्षरेणाध्वर्युः प्रतिगृह्णाति। तन्मिलित्वा अष्टाक्षरं संपद्यते। तच्चाष्टाक्षरं गायत्रीसदृशं तस्या अपि पादस्याष्टाक्षरत्वात्। इदमेकं प्रातःसवनरूपे गायत्रपदप्रतिष्ठापनम्। तथा सवनान्तेऽपि शंसनानन्तरं—उक्थं वाचि—इति होता चतुरक्षरमाह। ओं उक्थशाः—इति चतुरक्षरमध्वर्युः। तदष्टाक्षरं संपद्यते। एतदेकं परं गायत्रे गायत्रस्थापनम्। तथा त्रैष्टुभान्माध्यंदिनसवनात् त्रैष्टुभमाहावप्रतिगरणरूपं पदं निरतक्षत ऋत्विजः। तद्यथा। माध्यंदिनसवने होता—अध्वर्यो शोंसावोम्—इत्याह्वयते षडक्षरेण। अध्वर्युश्च—शंसामोदैवोम्—इति पञ्चाक्षरेण प्रतिगृह्णाति। तन्मिलित्वा एकादशाक्षरं संपद्यते। इदमेकं माध्यंदिनसवनादौ त्रैष्टुभे त्रैष्टुभाधानम्। तथा सवनान्तेऽपि शंसनानन्तरम्—उक्थं वाचि इन्द्राय—इति होता सप्ताक्षरमाह। अध्वर्युश्च—ओमुक्थशाः—इति चतुरक्षरेण प्रतिगृह्णाति। तन्मिलित्वैकादशाक्षरं संपद्यते। इदमपरं त्रैष्टुभे त्रैष्टुभस्थापनम्। तथा तृतीयसवने होता—अध्वर्यो शोंशोंसावोम्—इति सप्ताक्षरेणाह्वयते। शंसामोदैवोम्—इति पञ्चाक्षरेणाध्वर्युः प्रतिगृह्णाति। तन्मिलित्वा द्वादशाक्षरं भवति। तदिदं प्रथमं जागते जागतोत्पादनम्। तथा पश्चादपि होता शंसनानन्तरमाह—उक्थं वाचि इन्द्राय देवेभ्यः—इति। एतदेवैकादशाक्षरं भवति। अध्वर्युश्च—ओम्—इत्येकाक्षरेण प्रतिगृह्णाणि। तदुभयं मिलित्वा द्वादशाक्षरं भवति। तदिदमपरं जागते जागतपदस्थापनम्। एवं छन्दःसु त्रिषु गायत्रादिसवनेषु गायत्र्यादिछन्दस्त्रयपदप्रतिष्ठापनम्। एतत् सर्वं ऐतरेय-ब्राह्मणे देवविशः कल्पयितव्या इति खण्डे विस्पष्टमाम्नातम्। तत्तादृशं छन्दसि छन्दःस्थापनं ये इत् विदुः ये एव जानन्ति ते एव अमृतत्वमानशुः प्राप्नुवन्त्य-नुष्ठानद्वारा। एवमजानन्तः अनुष्ठानेनापि फलं न प्राप्नुवन्ति इत्यर्थः। तस्य साकल्याभावादिति भावः॥

२३. आऽहितम्-निःऽअतक्षत-आऽहितम् अमृतऽत्वम्—इति पदपाठः।

अथ महावाक्यविषये गायत्रीत्रिष्टुब्जगत्यः छन्दांसि सन्ति। तान्याह। गायत्रे गायत्रीछन्दसि। छन्दःसु—स्वार्थे उपसंख्यानम्। अधि अधिकं सर्वोत्कृष्टं यद्ब्रह्म आहितम्। हि गतौ। आगतं अवगतं ब्रह्म। गायत्रं ब्रह्मेत्युच्यते। संज्ञाकरणस्य

प्रयोजनं वक्ष्यामः । गायत्री ब्रह्मविद्या—इत्येषा विद्या समाख्यायते । गायत्री छन्दस्तु एतद्वाक्यं च—तत् सवितुर्वरेण्यम्—इत्येतदेव सम्प्रदायादवगम्यते । ब्रह्मविद्यात्वेन गायत्र्यर्थोऽभिधीयते—सवितुः लोकानां जनयितुः क्षित्यादिकं सकर्तृकं इत्याद्यनुमान-सिद्धस्य । देवस्य चेतनस्य ईशितुः इति तत्पदस्य वाच्यं रूपमुक्तम् । तत् तस्य सद्रूपम् । भर्गः भर्जनदहनप्रकाशात्मकं चिद्रूपम् । वरेण्यं वरणीयं प्रार्थनीयं सुखात्मकं आनन्दरूपम् । एवं पदत्रयेण सच्चिदानन्दात्मकमुक्तम् । इत्थं तत्पदलक्ष्यं उक्तरूपं धीमहि ध्यायामः । ध्यानकर्तारो नानारूपा उक्ता इति त्वंपदवाच्यं रूपं उक्तम् । कीदृशस्य सवितुः । यः सविता नः अस्माकं संबन्धिनीः धियः कर्तृत्वादिबुद्धीः प्रचोदयात् अपनुद्यात्—इति त्वंपदलभ्यं रूपमुक्तम् । अत्र वेदमित्र आह—

> द्वाभ्यां देवस्य वाच्यं यत् त्रिभिर्लक्ष्यं निजं स्मृतम् ।
> जीवस्य वाच्यमेकेन चतुर्भिर्लक्ष्यमुच्यते ॥

इति । पक्षान्तरे वाशब्दः । त्रैष्टुभात् त्रिष्टुप्छन्दस्कान्मन्त्रात् । त्रिष्टुभा प्रोक्तत्वात् त्रैष्टुभं ब्रह्मेत्युच्यते । निरतक्षत निष्कृष्य निर्णीतवन्तः । के । हिरण्यस्तूपाद्या आचार्याः । अत्रापि संप्रदायवशादेव मन्त्रविशेषधीः । संज्ञाकरणस्य प्रयोजनं वक्ष्यामः । त्रैष्टुभी ब्रह्म-विद्या—इत्येषा विद्या समाख्यायते । ब्रह्मविद्यात्वेन उपेदहम्—इति मन्त्रो व्याख्यायते ।

> उपेदहं धनदामप्रतीतं ज्जुष्टां न श्येनो वसतिं पतामि ।
> इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥

अहं जीवात्मा हिरण्यस्तूपाख्यः धनदातारं इष्टदातारं अप्रतीतं अप्रमेयं लक्ष्यं पतामि इत् प्रविशाम्येव ब्रह्म । यथा श्येनः पक्षी इतस्ततश्चरित्वा पुनर्जुष्टां स्वप्रियां वसतिं प्रविशति तद्वत् । प्रवेशमात्रे दृष्टान्तः । प्रकृते चैक्यस्य विवक्षितत्वात् । ईशप्रवेशे कारणमाह । इन्द्रमीश्वरं नमस्यन् आराधयन् अहमुपपतामि । शतृप्रत्ययः । कैः उपमेभिः अन्येषां दृष्टान्तभूतैः अत्युत्कृष्टैः अर्कैरर्चनैः । स इन्द्रः कीदृशः । य इन्द्रः स्तोतृभ्यः स्तोतॄन् तारयितुम् । हव्यः प्रार्थनीयः यज्ञभवो वा अस्ति भवति । यामन् यावत्काले । यद्वा । पक्षान्तरमिदम् । जगन्निरतक्षत । जागतं ब्रह्म । प्रायपाठात् अक्षरसाम्याच्च जगत्याः पर्यायान्तरं वा इदम् । जगति जगत्यां छन्दसि प्रतिपाद्यत्वेन आहितम् । पदं पदनीयं गम्यफलरूपम् । संज्ञाकरणस्य प्रयोजनं वक्ष्यामः । एषा विद्या जगति ब्रह्म-विद्येत्युच्यते । अत्र विशेषधीः संप्रदायविशेषादेव ।

> अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽवतस्थे कदा चन ।
> सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथना ॥

अहं सप्तगुर्वैकुण्ठो जीवात्मापि इन्द्र ईश्वरः परमात्मैव न पराजिग्ये इत् नैव पराजयामि। धनं गोपितं वस्तु। न चापि मृत्यवे मरणाय मृत्युदेवतायै वा अवतस्थे। अत्र— प्रकाशनस्थेयाख्ययोश्च—इति लोकेऽप्यात्मनेपदम्। समवप्रविभ्यः स्थः—इति सूत्रात्। चतुर्थीदर्शनं हि—श्लाघह्नुङ्स्थ—इति सूत्रात्। मृत्योरगोचरोऽहमित्यर्थः। कदाचन कस्मिन्नपि काले। अतश्च सोमं सुन्वन्तः यष्टारः मां ब्रह्मीभूतमीश्वरं इत् एव याचत सुरहस्यं वस्तु प्रार्थयध्वम्। किंच भोः पूरवः मनुष्याः मे मम सख्ये सखिकर्मणि पूजा-दानेन रिष्यथ न प्रमाद्यध्वम। अत्र त्रैष्टुभे जागते च वाक्ये श्लोकौ।

अहमीशं विशामीष्टं पदं लक्ष्यं समर्चितुम्।
यो भक्तैः प्रार्थ्यते मुक्तैस्त्रिषु लोकेषु सद्गतिः॥
जीवोऽहं न परैरीश्यो न मृत्युः प्रभवेन्मयि।
मां याचत धनं सौम्या यतध्वं मम पूजने॥

इति। एवं तावद्गायत्रत्रैष्टुभजागतसंज्ञाभिर्ब्रह्मविषयास्त्रयः पक्षाः उपन्यस्ताः। तत्प्रयो-जनमुत्तरत्र वदन् दीर्घतमाः स्वमतं तावदाह—ये इत् ये तु तद्ब्रह्म छन्दोभिरनुपहितं निर्गुणं तत्त्वमस्यादिवाक्यलक्ष्यं निःसंज्ञकं विदुरनुभवन्ति तेऽमृतत्वमिहैव मोक्षमानशुः अश्नुवते। यद्वा अमृतत्वं आनशुः भुञ्जते अनुभवन्ति। अश्नातेरिदं रूपं परस्मै-पददर्शनात्। कल्पस्तु—

गायत्रं ब्रह्म यत्तत् सवितुरिति मनौ तन्मतं कौशिकानां
हैरण्यस्तूपकानामहमिदुपमनौ त्रैष्टुभं ब्रह्म तत् स्यात्।
यद्वैकुण्ठोऽहमिन्द्रो न इति पठितवान् जागतं ब्रह्म तत् स्या-
देते पक्षा गुणाढ्या मम तु मतमिदं तत्त्वमस्यादितो धीः॥

इति। अस्यायमर्थः। तत् सवितुर्वरेण्यं इति मनौ मन्त्रे कौशिकानां विश्वामित्राणां मते यद्ब्रह्म तद्गायत्रमित्युच्यते। हैरण्यस्तूपकानां मते ब्रह्म तु अहमिदमुपमनौ अहं इत् उप इति पदत्रयवति मन्त्रे। उपेदहमिति मन्त्रे इत्यर्थः। छन्दोभङ्गभयादेवमुक्तम्। तद्ब्रह्म त्रैष्टुभं स्यात्। तथा यद्ब्रह्म वैकुण्ठः सप्तगुः अहमिन्द्रो न पराजिग्ये इति मन्त्रे पठित-वान्। वाक्ये सन्धेरैच्छिकत्वात् सन्धेरभावः। तद्ब्रह्म जागतमित्युच्यते। एते त्रयः पक्षा अपि गुणाढयाः छन्दोरूपोपाधिमन्त इति प्राप्तगुणाः। एवं च मम दीर्घतमसो मतं तु तत्त्वमस्यादिभिरेव वाक्यैर्जाता धीर्ब्रह्मविद्या इति॥

**गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम्।**
**वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः॥ २४॥**

**गायत्रेण** गायत्रच्छन्दसा **अर्कं** अर्चनसाधनं मन्त्रं **प्रति मिमीते** प्रत्येकं परिच्छिनत्ति । अर्को मन्त्रो भवति यदेनेनार्चन्ति—इति निरुक्तम् । प्रतिमन्त्रं गायत्रेण छन्दसा उपनिबद्धं करोति । उपलक्षणमेतदन्येषां छन्दसाम् । यद्वा इतरेषां छन्दसामस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः -प्रतिमिमीते इत्यर्थः । यद्वा प्रतिशब्दः सं इत्येतस्मिन्नर्थे । छन्दोभिर्मन्त्रान् संमितान् करोति इत्यर्थः । **अर्केण साम** उक्तलक्षणेन मन्त्रेण साम गायत्ररथन्तरसंज्ञकं साम प्रति मिमीते । नन्वेकं साम तृचे क्रियते इति तिसृष्वेकं साम विहितम् । अतः—अर्कैः साम—इति वक्तव्यम् । कथमुच्यते—अर्केण—इति । न । वस्तुत एकं साम एकस्यामृचि आरूढम् । पश्चादन्योन्यं तदुत्तरयोर्गायति इत्यतिदेशनः प्राप्तं तिसृषु गानम् । अत एकवचनमविरुद्धम् । **त्रैस्तुभेन वाकम्** । अत्र त्रिष्टुबुपादानं इतरच्छन्दःप्रदर्शनार्थम् । अथवा अनादेशे सर्वत्र त्रिष्टुभो ग्रहणात् प्राचुर्याभिप्रायेणेदमुक्तम् । त्रैष्टुभेन द्विवार-त्रिवारावृत्तेन द्व्यृचतृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रति मिमीते । अथवा वाकं सूक्तम् । एतावद्भिस्त्रिष्टुब्भिरुपनिबद्धमिदं सूक्तमिति । तादृशेन **वाकेन वाकं** वर्गमनुवाकं वा मिमीते । कीदृशेन वाकेन इति स विशेष्यते । **द्विपदा चतुष्पदा** । द्विपदा पादद्वयबद्धविराडादिछन्दोनिबद्धमन्त्ररूपेण चतुष्पदा पादचतुष्टयोपेतेनानुष्टु-बादिमन्त्ररूपेण इति । इयतीभिर्द्विपदाभिरुपेतो वर्गः इयतीभिश्चतुष्पदाभिरुपेतो वर्गः । इयद्द्विपदरूपैर्वाकैः इयच्चतुष्पदरूपैर्वाकैश्च परिमितोऽनुवाकः इति । सूक्त-पक्षे एतावद्भिः सूक्तैरयमनुवाकः इति । किंच **अक्षरेण** अक्षरेणैव **सप्त वाणीः** वागधिष्ठितानि सप्त छन्दांसि **मिमते** निर्माणं कुर्वन्ति । अष्टाक्षरा गायत्री एका-दशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती इति । अक्षरैः पादाः परिमीयन्ते । तत्परि मितैः पादैः छन्दांसि । ततः पादानां छन्दसां च अक्षरं मूलं इति । तथा ऋग्वर्गसूक्तानुवाकादीनां च अक्षरं मूलं इत्यक्षरप्रशंसा ॥

२४. द्विऽपदा-चतुःपदा—इति पदपाठः ।

अत्र गायत्रत्रैष्टुभजागतसंज्ञाकरणप्रयोजनोक्तिः । तत्रापि सगुणे ब्रह्मणि अहंग्रहणो-पास्यमाने फलं यादृशं तदुक्तम्—ये अर्वाञ्चः—इत्यत्र । अत्र तु गायत्रादिभिर्गुणैः सगुणे ब्रह्मणि अहंग्रहणोपास्यमाने फलविशेषः प्रतिप्रदर्श्यते । गायत्रेण गायत्रसंज्ञकेनो-

पासितेन ब्रह्मणा अर्कं सूर्यं प्रतिमिमीते गच्छति। धातूनामनेकार्थत्वात्। तदनन्तरं अर्केण प्रयोजकेन साम सामाभिमानिनीं देवतां सालोक्येन गच्छति। ततो ब्रह्मलोकक्रमेण मुक्तिर्वक्ष्यते। त्रैष्टुभेन त्रैष्टुभसंज्ञकेनोपासितेन ब्रह्मणा वाकं वागभिमानिनीं देवतां प्रतिमिमीते। वचेर्घञि कुत्वे मत्वर्थे अच्। तेन वाकेन प्रयोजकेन वाकं महावाक्यं उपनिषदभिमानिनीं देवतां प्रतिमिमीते। ततो ब्रह्मलोकक्रमेण मुक्तिर्वक्ष्यते। त्रैष्टुभशब्दे—उत्सादिभ्योऽञ्। अथ क्रमप्राप्तं जागतं ब्रह्म त्यक्त्वा त्रैष्टुभब्रह्मणा तुल्यफलत्वात् प्रासङ्गिकविद्यात्रयमेकफलमाह। द्विपदा द्विपदामन्त्रेण प्रतिपाद्यं ब्रह्म। द्विपदा त्वेषा द्विपदी ब्रह्मविद्या। द्विपदा ब्रह्मणा उपासितेन वाकं प्राप्य तेन प्रयोजकेन वाकमुपनिषद्देवतां प्रतिमिमीते। उपासकसंप्रदायप्राप्तं द्वैपदं वाक्यमुदाहरिष्यामः। द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ—इत्युत्तरपदाद्युदात्तत्वम्। चतुष्पदा इत्यत्र बहुव्रीहिस्वरः। चतुष्पदा अनुष्टुभा बृहत्या च प्रतिपाद्यं ब्रह्म सामान्यसंज्ञया चतुष्पात्। विशेषसंज्ञया आनुष्टुभी बार्हती चोच्यते। चतुष्पदा ब्रह्मणा उपासितेन वाकं प्रतिमिमीते उपासकः। अत्र संप्रदायप्राप्तानि द्वैपदानुष्टुभबार्हतानि उदाह्रियन्ते। तत्र द्वैपदं पराशर आह—

> आदित्ते विश्वे क्रतुं जुषन्त शुष्काद्यद्देव जीवो जनिष्ठाः।

इति। यदा ते तव परमात्मनोऽग्रे क्रतुं प्रज्ञानं सम्यग्ज्ञानं जुषन्ते सेवन्ते आश्रयन्ते आदित् तदैव विश्वे सर्वात्मका मुक्ता भवन्ति। यदा तु शुष्कात् क्रतोर्नीरसात् अहंग्रहणशून्यात् सगुणज्ञानात् भो देव जीवो जनिष्ठाः जीवात्मा जायते इति। अथ आनुष्टुभम्—

> आपो अद्यान्वचारिषं रसेन समगस्मसि।
> पयस्वानग्न आ गहि तं मा सं सृज वर्चसा॥

इति। भो आपः उदकाभिमानिन्यो देवताः इदं शृणुत। अद्य अस्मिन्नहनि अन्वचारिषं अनुचरो जातोऽस्मि एतावन्तं कालम्। किमर्थम्। रसेन पारमार्थिकेन रूपेण ब्रह्मणा समगस्मसि संगतो भवानि इति धिया। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति—इति श्रुतेः। अतश्च पयस्वान् उदकमध्यवर्ती त्वं च भो अग्ने अग्रणीः परमात्मन् आगहि आगच्छ। आगत्य च तं प्रागुक्तकारणवन्तं सेवमानं त्वदभिन्नात्मकं वर्चसा तेजसा स्वस्वरूपेण संसृज संयोजय इत्याशास्महे। अथ बार्हतं ब्रह्म उच्यते। तत्र प्रगाथ आह—

> मा चिदन्यद्वि शंसत सखायो मा रिषण्यत।
> इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥

इति । परमात्मनोऽन्यद्वस्तु मान्वित् मैव विशंसत विशेषेण सत्यमित्यवोचत । अन्यशंसने संसारः स्यादित्याह । भोः सखायः मा मैव रिषण्यत रेषं पुनः पुनर्हिंसनं मैत । रिषण इति कण्ड्वादौ पठन्ति । किंतु इन्द्रमित् इन्द्रमेव स्तोता भजत । वृषणं मनोरथवर्षकं सचा सह भवत च । सुते यज्ञे मुहुः पुनः पुनश्च उक्थानि श्रेष्ठानि वचांसि शंसत ब्रूत । गायत्रादिषु सगुणब्रह्मप्रतिपादकेषु महावाक्येष्वनुगतः यः प्रणवः तमाश्रित्य अपरा अस्ति ब्रह्मविद्या इति ब्रह्मवित्प्रसक्तानुप्रसक्त्या तामप्याह अक्षरेणेति । अक्षरमिति यत्तत्प्रतिपाद्यब्रह्मापि अक्षरमुच्यते । अक्षरसंज्ञकेन उपासितेन ब्रह्मणा मिमते गच्छन्ति सप्तसंख्याका वाणीः छन्दोरूपत्वागभिमानिनीर्देवताः । प्रणवार्थस्तु अकारो-कारमकाराः तत्त्वमसिपदार्थान् आहुः । एभिस्तु राजससात्त्विकतामसं ब्रह्मविष्णुरुद्रात्मकं क्रमेण परमात्मनो रूपमुच्यते जाग्रत्स्वप्नसुषुप्त्यवस्था वा भूर्भुवःस्वर्लोका वा ऋग्यजुः-सामानि वा । ओ इति पदेन तुरीयं निर्गुणं स्वरूपमुच्यते । तस्मादोंकारशरीरो भगवान् समुदायात्मकेन । ओंकारो जपसमाधिभ्यां साक्षात्करणीय इति । एषा विद्या अक्षर-ब्रह्मविद्येत्युच्यते । कल्पस्तु—

> गायत्रवाग्यज्ञ इयर्ति सूर्यं सूर्येण सामाथ स याति वाकम् ।
> यस्त्रैष्टुभे ब्रह्मणि धीसमेतो वाकेन वाकाख्यमुपैति देवम् ॥
> इदमेव फलं याति द्विपदानुष्टुभेन च ।
> ब्रह्मणा बार्हतेनापि प्रसङ्गादुदितं त्रयम् ॥
> आदित्ते विश्व इत्याह शक्तिपुत्रः पराशरः ।
> आपो अद्येति चाह स्म सिन्धुद्वीपः स्वकं मनुम् ॥
> मा चिदन्यदिति प्राह प्रगाथो बार्हतीं गिरम् ।
> अक्षरेणेति सत् प्रापि छन्दोहंकारिदेवता ॥
> प्रसक्तानुप्रसक्त्येतदुदितं प्रणवाश्रयम् ।
> क्रमेण ब्रह्मसंप्राप्तिर्गायत्रादिषु वक्ष्यते ॥

इति—गायत्रेण प्रति—इति मन्त्रस्य कल्पे पञ्चश्लोकाः सन्ति ॥

**जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्यं पर्यपश्यत् ।**
**गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे महित्वा ॥ २९ ॥**

जगतीच्छन्दस्कायामृचि उत्पन्नं साम जगत् । तेन **जगता** ब्रह्मा सृष्टिकाले **सिन्धुं** स्यन्दनशीलं उदकस्य स्यन्दकं वा आदित्यं **दिवि** द्युलोके **अस्तभायत्**

स्तम्भितवान् । जागतो वा एष य एष तपति—इति श्रुतिः । **रथन्तरे** एतन्नामके साम्नि स्तम्भितं **सूर्यं परि अपश्यत्** परिदृष्टवान् प्रजापतिः । तदाधारभूतायामृचि—स्वर्दृशम्—इति सूर्यप्रतिपादकशब्ददर्शनात् । असौ वाव स्वर्दृक्—इति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते—रथन्तरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेत—इति सामब्राह्मणेन । **गायत्रस्य** गायत्र्यामुत्पन्नस्य साम्नः **समिधः** समिन्धनाः **तिस्रः** विभक्तीः **आहुः** । पादत्रयमाहुः इत्यर्थः । अथवा तिस्र ऋच आहुः । **ततः** हेतोः **मह्ना** बलेन **महित्वा** महत्त्वेन **प्र रिरिचे** परिच्यते । अन्यानि सामानि पृथक्पृथक् निर्मितवान् । यद्वा गायत्रशब्दः छन्दोवाची तस्य तिस्रो मूर्तीराहुः क्रमेणाष्टाक्षरैकादशाक्षरद्वादशाक्षरैः गायत्रीत्रिष्टुब्जगत्यात्मिकाः । यस्मादेवं ततः तस्मात् गायत्री छन्दसां कनिष्ठा सती मह्ना बलेन महत्वेन च प्ररिरिचे सर्वाणि छन्दांसि अतिक्रामति येनैव बलेन सोममाहृतवती तादृशेनैवं भवति ॥

२५. रथंऽतरे-संऽइधः-महिऽत्वा इति पदपाठः ।

प्रकृतमवशिष्टं जागतं ब्रह्माधिकृत्योच्यते । जगता जागतेनोपासितेन ब्रह्मणा सिन्धुं समुद्राभिमानिनीं देवतं दिवि स्वर्लोके अस्तभायत् वशीकरोति । द्युस्थानप्रसङ्गाद्विद्यान्तरमाह । रथन्तरे रथन्तरसामप्रतिपाद्यं यत् ब्रह्म तत् रथन्तरसाम । प्रतिपाद्यत्वं सामाभिव्यङ्ग्यत्वमात्रम् । साम्नं वर्णपदवाक्यात्मकत्वाभावात् । रथन्तरे ब्रह्मणि उपासिते सति सूर्यं वशीकृतं परितः पश्यति । रथन्तरसामानि तु अस इत्यन्तवन्ति । छन्दःसामानि तु—अभि त्वा शूर नोनुमः । रहस्यग्रन्थे तु—आ एना वोऽग्निम् । छन्दसि तु—एना वो अग्निं नमसा—इति । प्रत्यु अदर्श्यायवाम् । आ इमा उ वाम् । छन्दसि तु—इमा उ वां दिविष्टयः । अत्र—गीतिषु सामाख्या—इति वचनात् गीतिमात्रस्य सामत्वं निराधारगीत्यसंभवात् आधारत्वमात्रमृचाम् । न च गीत्यर्थे ब्रह्मणापि वक्तुं शक्यः । अतः ऋग्द्वारेणोपयोगो गीतेः । अतः छन्दसि ग्रन्थे पठितानामेव ऋचामर्थः कथनीयः न साम्नाम् । अतो रथन्तरसामार्थो नोच्यते । अत एव साम्नां महाकल्पे उक्तम्—

> साम्नां नार्थोऽस्ति ब्रह्मैव सामर्थ्यं तेषु विद्यते ।
> सर्ववेदोत्तमं साम तत्रान्ये अंशभाजिनः ॥

इति । अथ गायत्र्यादीनां रथन्तरान्तानां विद्यानां महाफलमाह । गायत्रस्य अजहल्लक्षणया गायत्रादेः सप्तकस्य गणस्य गायत्रत्रैष्टुभजागतद्वैपदानुष्टुभबार्हतरथन्तराख्यानां

विद्यानाम्। समिधः फलाभिव्यञ्जकास्तिस्रो मूर्तयो भवन्ति। अयमर्थः। गायत्राद्युपासकानां ब्रह्मा वा विष्णुर्वा शिवो वा अवान्तरफलभोगानन्तरं अर्चिरादिमार्गेण स्वकान् लोकान् नयन्ति। तत्र ते तदुपासकानां तारतम्येन तेभ्यः फलविशेषान् ददति। ब्रह्मादयस्त्रयोऽपि सगुणं ब्रह्म इत्युच्यते। तेषां लोको ब्रह्मलोक इत्येवोच्यते। आह च योगयज्ञावल्क्यः—

अहंग्रहेण सगुणब्रह्मणः सेवकान् नरान्।
सगुणब्रह्मसंज्ञा ये ब्रह्माद्यास्ते स्वकं पदम्॥
ब्रह्मलोकाख्यमानाय्य नन्दयन्ति यथायथम्।
लयकाले तु तैः सार्धं मुच्यन्ते भावितात्मभिः॥

इति। ततो ब्रह्मलोकभोगानन्तरं मह्वा महता विष्ण्वादिना सगुणेन ब्रह्मणा सह तदुपदिष्टसगुणोपासनं श्रुत्वा क्षणमवधार्य प्ररिरिचे प्रकर्षेण प्रपञ्चात् पृथग्भवन्ति महित्वा महत्त्वेन मुक्तत्वेन हेतुना। तदुक्तं ब्रह्मपुराणे—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते यतात्मानः प्रविशन्ति परं पदम्॥

इति। वाचस्पतिनाप्युक्तम्—

विद्याकर्मस्वनुष्ठानैस्तोषितेश्वरचोदिताः।
अधिकारं समाप्यैतत् प्रविशन्ति परं पदम्॥

इति। कल्पस्तु—

यो जागतं वेद स सिन्धुलोकं रथन्तरज्ञः परिसूर्यदर्शी।
ब्रह्मादयस्तान् स्वपदं नयन्ति ते तैः सहान्तेऽश्नुवते निजं स्वम्॥

इति॥

प्रवर्ग्यो घर्मधुगाह्वानकाले—उपह्वये—इत्यादिके द्वे ऋचौ। उपह्वये सुदुघां धेनुमेतां इति द्वे—इति सूत्रितत्वात्।

**उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम्।**
**श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभीद्धो॑ घ॒र्मस्तदु॒ षु प्र वो॑चम्॥ २६॥**

अहं होता **उप॑ ह्वये** उपेत्य आह्वयामि। किम्। **ए॒तां धे॒नुं** आगच्छन्तीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थाम्। पुनः कीदृशीम्। **सु॒दुघां॑** सुष्ठु दोग्ध्रीम्।

उत अपि च एनां उक्तलक्षणां गां सुहस्तः शोभनहस्तः दोहनकुशलः । गोधुक् गोदोग्धा अध्वर्युः दोहत् दोग्धि । यस्मादेवं तस्मादुपह्वये इत्यर्थः । तदर्थं सविता सर्वस्यानुज्ञाता परमेश्वरः नः अस्मदीयं श्रेष्ठं प्रशस्यं सवं सोमयागं क्षीरं वा साविषत् अनुजानातु । कथमेवम् । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यत् यस्मात् घर्मः प्रवर्ग्यः । यद्धूॉं इत्यपतत् तद्धर्मस्य घर्मत्वम्—इति तैत्तिरीयकम् । तादृशः अभीद्धः अभिदीप्तः । तत् उ । उशब्द एवकारार्थः । तस्मादेव कारणात् सु प्र वोचं सुष्ठु प्रवीमि इति । यद्वा एतां पुरतो दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुं उपह्वये आह्वयामि वर्षदोहाय । किंच एनां धेनु सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुक् गोदोग्धा आदित्यो वायुर्वा दोहत् दोग्धि । तदधीनत्वाद्वर्षणस्य । किंच तदर्थं सविता प्रेरकः परमेश्वरः नः अस्मदर्थं अस्मदुपभोगादृष्टमपेक्ष्य साविषत् अनुजानातु । प्रतिबन्धं मा करोतु इत्यर्थः । किमिति इदमुच्यते इति । उच्यते । घर्मो ग्रीष्मः अवर्षणजनितः सस्यशोषः । अभीद्धः प्रवृद्धः । तदुषु प्रवोचं तस्मादेव कारणात् ब्रवीमि । ब्रवीतेर्लुङि वच्यादेशे—अस्यतिवक्ति—इत्यादिना च्लेरङ् । छान्दसः अडभावः ॥

२६. सुऽदुघाम् सुऽहस्तः-गोऽधुक्-अभिऽईद्धः-ऊं इति—इति पदपाठः ।

वैश्वामित्रहैरण्यस्तूपसात्तगवपाराशरसैन्धुद्वीपप्रागाथराथन्तराः सप्त पक्षा उक्ताः । य इत्तद्विदुः इति स्वमतमुक्तम् । शास्त्रान्तरे च अन्येऽपि पक्षाः सन्ति । तेषां परस्परविरुद्धानां मध्ये कः पक्षो ज्यायान् । तत्रोत्तरम् । उप उपग्राह्यत्वेन ह्वये स्वीकरोमि । सुदुघां सुष्ठु दोहिकां शुभकर्मभिर्व्यासादिभिः सूत्रप्रणयनेन दुह्यमानत्वात् । न वैशेषिकादिमतानुसारिभिः । दुहः कप् घश्च । धेनुं कामधेनुस्थानीयाम् । धिनोति प्रीणयति इति धेनुः । ताम् । आपो वाव धेनवः । ता हि इदं सर्वं धिन्वन्ति इति । एतां प्रसिद्धां प्रकृतां च अध्यात्मपरां श्रुतिम् । ननु श्रुतिव्याख्यानरूपाणामपि दुर्बोधत्वात् सूत्रव्याख्यातश्रुत्यर्थो दुर्बोध एव । तत्राह—उत तथा एनां प्रकृतां श्रुति दोहत दोग्धि । कः । गोधुक् व्याससूत्राणां भाष्यकरणद्वारा सूत्रवाचां दोग्धा । सूत्रवाक्यतात्पर्यविवेचक एव श्रुतिं दोग्धि । तात्पर्यकथनेन श्रुत्यर्थसारं कथयति । न च भेदमाश्रित्य व्याससूत्रभाष्यकारादिमतं इह ग्राह्यं इत्याह—सुहस्तः सुखहस्तः सुखकरः शङ्कराचार्यः । स गोधुक् सूत्रवाचां तात्पर्यज्ञः भाष्यकारो व्यासादिसूत्रव्याख्यानद्वारा यथा गां श्रुतिं

दोग्धि तथैव। तदर्थो नान्यार्थ इत्यर्थः। यद्वा उत एव। स एव दोहद्दोग्धा एनां उपनिषदम्। न च शङ्कराचार्यो मर्त्यमात्रं इत्यत आह—श्रेष्ठं अज्ञानलक्षणस्य अन्तस्तमसो हन्ता। सवं जन्म। सविता साविषत् आसादितवान् नः अस्मदर्थम्। नृशब्दसंबुद्धिरेषा इति केचित्। तत्र सवितापि जीवमात्रं इत्यत आह—अभीद्ध इति। अध्यात्मप्रकाशितः। घर्मः। घृ क्षरणदीप्त्योः। विगलिताविद्यः परमात्मैवात्र सूर्यपदेन विवक्षितः। महापुरुष इति यमवोचाम—इत्यारभ्य खण्डसमाप्तिपर्यन्तं एतां अनुविद्यासहितां इत्यनेनोपनिषद्वाक्येन अयमर्थः स्फुटमुक्तः। ननु अध्यात्मप्रकरणे शङ्कराचार्योत्पत्तिनिरूपणं व्यर्थम्। तत्राह—तदु तद्वाच्यं ब्रह्मैव सु सुष्ठु असंशयं प्र प्रकर्षेण अविपर्ययेण अवोचं उक्तवानस्मि। अत्र शिवपुराणे वाराणसीमाहात्म्ये लगुडेश्वरोपाख्याने कणादाद्युत्पत्तिनिरूपणावसरे नारदं प्रति सनत्कुमारवचनम्—

कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव तु।
द्वापरे व्यासनामा तु कलौ शङ्करनामधृक्॥
सत्यः सुमेधसो ब्रह्मा पुत्रभावमुपागतः।
अत्रेर्दत्तः शक्तिपुत्रस्ततो व्यासः प्रकीर्तितः॥
विष्णुतेजःसुतः साक्षाच्छङ्करः परिकीर्तितः।
सत्यो ब्रह्मा हरिर्दत्तो व्यासो रुद्रः प्रकीर्तितः॥
शङ्करः सविता साक्षादीश्वरः सर्वदैवतम्।
युगे युगे प्रनष्टस्य शास्त्रस्योद्धारणाय वै॥
श्रुतिस्मृत्यर्थबोधाय पाखण्डनिधनाय च।
अध्यात्मशास्त्रविज्ञप्त्यै लोकानुग्रहकारणात्॥
सुराद्यभ्यर्थितो देव ईश्वरः परमेश्वरः।
अवतारांश्चकारासौ श्रुतिस्मृत्युदितान् स्वकान्॥

इति कल्पस्तु—

प्रामाणिकः श्रुत्युदितः स योऽर्थो
व्यासोक्तरीत्या प्रतिपादितश्च।
व्यासोदितं शङ्करबोधितं च
यः शङ्करोऽसौ सविता स ईशः॥
व्याकुर्वन् व्याससूत्रार्थं श्रुत्यर्थांश्च यथोचितान्।
श्रुत्यर्थो यस्तथैवासौ शङ्करः सविता ततः॥

इति॥

**हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।**
**दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ २७ ॥**

यथाहूता गौः **हिङ्कृण्वती** वत्सं प्रति हिङ्कारं कुर्वती **वसूनां वसुपत्नी** क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री । वृत्त्यवृत्तिभ्यां वसुनः पालयितृत्वम् । तस्यैवाधिक्यं च प्रतिपाद्यते । पुनः कीदृशी । **मनसा वत्सं इच्छन्ती** । ईदृशी सा **अभि आ अगात्** अभ्यागमत् । **इयं** आगता **अघ्न्या** । गोनामैतत् । अहननीया गौः । **अश्विभ्यां** ताभ्यां अथाय । **पयः** क्षीरम् । **दुहां** दुग्धाम् । **सा** तादृशी **महते** सौभगाय प्रवृद्धाय सौभाग्याय । **वर्धतां** प्रवृद्धा भवतु । यद्वा अस्मै सौभगाय क्षीरं वर्धयताम् । अत्रापि वृष्टिपरत्वेन यथायोगं योग्यम् । हिङ्कृण्वती वर्षणाय शब्दयन्ती वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत् पोषणीयं मनसा इच्छन्ती प्रीणयितुमभ्यागात् अभ्यागच्छति मेघरूपा । सा च अघ्न्या अहन्तव्या । प्रस्तुता इत्यर्थः । पयः उदकं अश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय । यद्वा अश्विनौ वाय्वादित्यौ । ताभ्यां सकाशात् दुहां दुग्धाम् । तौ हि वृष्टेर्मोचयितारौ । शिष्टमविशिष्टम् ॥

२७. हिङ्ऽकृण्वती-वसुऽपत्नी-अश्विऽभ्याम्—इति पदपाठः ।

श्रीशङ्कराचार्यव्याख्यायां ब्रह्मविद्यैव निष्कृष्यते इत्याह—वसुपत्नी ब्रह्मविद्या । वसू देवौ जीवपरमात्मानौ वसनौ छादनशीलौ पती ईशौ विषयत्वेन पतनीयौ ज्ञापनीयौ यस्याः सा वसुपत्नी जीवपरावेकत्वेन प्रकाशयन्ती । विभाषा सपूर्वस्य—इति ङीष् । नकारश्चान्तादेशः । पुनः कीदृशी । वसूनां वत्समिच्छन्ती । वसुः इति रश्मिनाम देवतानाम च । वामदेवादीनामंशानां देवतात्वेन भावितात्मनां ब्रह्मविद्याचार्याणां वत्सं पुत्रं भावितं शिष्यं इच्छन्ती ममायमस्तु इति काङ्क्षन्ती । अत्राह वेदमित्रः—

ईशत्वेनैव योगेन भावितोऽस्य गुरुः स हि ।
पुत्रस्य भावं प्राप्तो यः स च शिष्यस्तु संप्रति ॥

इति । हिङ्कृण्वन्ती । हि गतौ वृद्धौ च । हि प्रसिद्धं गतं अनुभवसिद्धं च देशकालानवच्छिन्नं सर्वशास्त्रप्रसिद्धं च ज्ञानं यस्य तत् ब्रह्म हिङ् ।

पञ्चमा ज्ञानवाचकाः ।

इत्येकाक्षरनिघण्टुः । ब्रह्मैव हिङ्कारः—इति श्रुतिः । तं वत्सं हिङ्कृण्वती ब्रह्म कुर्वन्ती ब्रह्मभावं नयन्ती । लक्षणहेत्वोः क्रियायाः—इति शतृप्रत्ययः । मनसा । मन निर्वचनकर्मा । मननेन गुरुवचनेन अभि आगात् अभ्यागच्छति । अत्यादरादेव निश्चितार्था भवति इति शिष्यस्य आत्मसात् भवति । श्रद्धया हृति स्थिरा भवति । सा पुनर्विद्या वेदान्तविचारादेव निश्चितार्था भवति इत्याह—दुहां अश्विभ्यां पयः । दुहां दुह्यते परमानन्दाख्यं पयः । अश्विभ्यां इन्द्रियाभ्यां गुरुशिष्याभ्याम् । द्विकर्मको दुहिः । कर्मणि प्रत्ययः द्वितीया छान्दसी । पयः ब्रह्म अमृतं क्षीरं च । अध्न्या । गोनामैतत् । गौश्चात्र श्रुतिः । अघं नयन्ती अहन्तव्या नित्या पापहन्त्री इयं उपनिषल्लक्षणा महावाक्यलक्षणा सा वर्धतां दीर्घा भवताम् । असकृदावर्तमाना दीर्घकालमनुवर्तते । आवृत्त्यवधिमाह—महते सौभगाय महानन्दाय महानन्दमनुसर्तुम् । यावदानन्दाविर्भावस्तावत् इत्यर्थः । सुभगान्मन्त्रे—इत्यञ् । कल्पस्तु—

आचार्यः शिवभावितो निजसुतस्थानी तु शिष्यो मतो
जीवेशौ विषयीकरोति निजसाद्भूतात्मविद्या यथा ।
शिष्यं ब्रह्म करोति सा श्रुतिमयी जीवेन दोह्या मति-
र्वर्त्या सानलसैर्नरैर्निजसुखप्रादुर्भवः सोऽवधिः ॥

इति ॥

प्रवर्ग्येऽभिष्टवे दोहनसमये वत्से मातुः सकाशादपनीयमाने—गौरमीमेत्—इत्येषा । सूत्रितं च—गौरमीमेदनु वत्सं मिषन्तं नमसेदुप सीदत—इति ।

**गौर॑मीमे॒दनु॑ व॒त्सं मि॒षन्तं॑ मू॒र्धानं॒ हिङ्ङ॑कृणो॒न्मात॒वा उ॑ ।**
**सृक्वा॑णं घ॒र्मम॒भि वा॑वशा॒ना मिमा॑ति मा॒युं पय॑ते॒ पयो॑भिः ॥ २८ ॥**

**गौः** धेनुः **मिषन्तं** निमीलिताक्षं **वत्सं अनु** प्राप्य **अमीमेत्** शब्दं करोति । मीमयतिः शब्दकर्मा । यद्वा उक्तं वत्समनु आत्मानं प्रक्षिपति । किंच तस्य वत्सस्य **मूर्धानं मातवै** मातुं निर्मातुं लेहनेन शोधयितुम् । उशब्दोऽवधारणे । **हिङ् अकृणोत्** हिङ्कारमकरोत् करोति । किं च **सृक्वाणं** वत्सस्य वदनप्रान्तं फेनस्य स्रष्टारं **घर्मं** क्षीरस्य क्षरणशीलं वत्सं **अभि** अभिलक्ष्य **वावशाना** भृशं कामयमाना । **मायुं** शब्दं **मिमाति** निर्माति करोति । तादृशी सती **पयोभिः** प्रभूतैः क्षीरैः **पयते** प्यायते आप्यायनं करोति वत्सम् । अत्रापि मेघपरतया

योजनीयम्। एवमाहूता मेघरूपा गौः धेनुः मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रमनु अनुसृत्य अमीमेत् गर्जनशब्दं वर्षणचिह्नरूपं करोति। मूर्धस्थानीयां भूमिं मातवै उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङकृणोत् हिङ्कार-रूपं शब्दमकरोत्। प्रतिपादनभेदादपुनरुक्तिः। किंच सृक्वाणं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभि वावशाना आभिमुख्येन कामयमाना पयोभिरुदकैः पयते प्यायते आप्यायनं करोति ॥

२८. ॐ इति-पर्यःऽभिः—इति पदपाठः।

उपह्वये—इत्यादयश्चत्वारो मन्त्रा भारद्वाजीये सूत्रे वाश्यमानधेन्वनुमन्त्रणे विनियुक्ताः। तथापि तद्विनियोजकः अधियज्ञविषयः। अस्मद्व्याख्या तु अध्यात्म-विषया। इत्युक्तं प्रागेव। इदानीं ब्रह्मविद्याप्रचुरश्रुतेः प्रवृत्तिविशेषानाह—गौः श्रुतिः अमीमेत् द्रमहममीमगतौ। रूपसिद्धिश्छादसी। पालयते वत्स पुत्रभावमापन्नं शिष्यं ब्रह्मविद्यायामुपदिष्टम्। मिषन्तम्। मिष दर्शने। पश्यन्तम्। सर्वदा ज्ञानमारूढम्। अनु उपलक्षयित्वा। अनेन आरूढभावं प्रतिपन्ने शिष्ये प्रवृत्तिर्दर्शिता। अथ तदधरमनु-भाविनं प्रति आह—हिङ् ब्रह्म। इदमुक्तं पूर्वमन्त्रे। मातवै उ। तवै चान्तश्च युगपत् —इति युगपदुदात्तद्वयम्। अन्तर्भावितोऽत्र ण्यर्थः। मापयितुम्। ज्ञापयितुमेव पूर्वोक्तं वत्सम्। मूर्धानं मुख्यं प्रवर्तकं श्रुतौ स्मृतौ चोपदेष्टारं अज्ञानहिंसकं अकृणोत् करोति। कृवि हिंसायाम्। अनुभवी तु लोकहितकर्ता आत्मानं परं च संसारादुद्धरति। स हि— ब्रह्म तत्त्वमसि—इति बोधयति शिष्यम्। अथ तदधरमभ्यसिनं प्रति आह—सृक्वाणम्। सृजेः क्वनिपि कुः— इति भोजः। सृक्वा वदनैकदेशः। चर्वणाधारः इति भट्टभास्कर-मिश्र आह। लेलिहान इत्यपरे। सृक्वाणं प्रयतमानं इत्यर्थः। घर्मं अभ्यस्यन्तं अभ्य-सिनं अभि लक्षयित्वा वावशाना स्निह्यतो हितकारिणी श्रुतिः अभ्यासकालवर्जं मिमाति प्रतिपादयति घर्मज्ञं घर्मं नित्यनैमित्तिकात्मकम्। अथ तदधरं मुमुक्षुं प्रति आह—मां प्रामां प्रमितिमात्मने इच्छन्तं वत्सं जिज्ञासुं मुमुक्षुं पयते। अय पय गतौ। गत्यर्थाः ज्ञानार्थाः। अन्तर्भावितण्यर्थः। बोधयति पयोभिः गमकैर्हेतुभिः विचारैः। पयते इत्यत्र एकवाक्ये इति प्रकृत्य युष्मदस्मदादेशा वक्तव्याः—इति वार्तिककारवचनात् निघातः। अत्रारूढानां लक्षणानि श्रीशङ्कराचार्यशिष्यद्रमिडस्वामिना उक्तानि—

अप्रसक्तसमाधिस्थदेहमात्रस्थितिक्रियः।
आरूढः स्यात् परानन्दी काललीलाक्रियोचितः॥

समाधावपरोक्षात्मविज्ञानानुभवो भवेत् ।
समाधिविद्भिः प्रारब्धेतरकर्माकरा इति ॥

तथा—

वाक्यैः संवाद्य सच्छास्त्राण्यभ्यसन् स्वपरोक्षधीः ।
वर्ततेऽभ्यासकाले तु त्यजन् कर्म सदा त्वयम् ॥
मुमुक्षुर्मोक्षकामी च स्वक्रियौघं सकृत् त्यजेत् ।
साधनाल्पमहत्त्वेन मुमुक्षुस्तारतम्यतः ॥

इति । कल्पस्तु—

नारूढे विधिरस्ति संविदधिके कर्मावकाशोज्झिते
लोके चानुभवी प्रवर्तकतया श्रुत्या प्रथां प्रापितः ।
अभ्यासी निगमोदितेषु रमते त्वभ्यासकालं विना
मोक्षेच्छुर्विहिताः क्रियाः प्रकुरुते काम्यां निषिद्धां विना ॥

इति ॥

**अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।**
**सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥**

**सः अयं** वत्सः **शिङ्क्ते** अव्यक्तध्वनिं करोति । **येन** वत्सेन **गौः** माता **अभीवृता** आगत्य अभितो वेष्टिता भवति । किंच सा गौः **मायुं** शब्दं **मिमाति** निर्मिमाति । कुत्र स्थिता । **ध्वसनौ अधि श्रिता** ध्वसनस्थाने गवां निवासाश्रये अधिष्ठिता । **सा** तादृशी **चित्तिभिः** ज्ञानैः तत्पूर्वकैः कर्मभिर्वा **मर्त्यं नि चकार हि** नीचैः करोति । ज्ञानविशिष्टा मनुष्या यथा बालकस्य आह्वानस्तनपानादिस्नेहं कुर्वन्ति ततोऽप्यतिशयं इयं करोति इत्यर्थः । किंच **विद्युत् भवन्ती** बहुक्षीरतया विद्योतमाना सती **वव्रिं** स्वकीयं रूपम् । वव्रिरितिरूपनाम । रूपं **प्रति औहत** प्रकाशयति । यद्वा वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शना सती औहत । अयमेकोऽर्थः ।

अर्थान्तरं च । शाकपूणिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवताः जानामि इति अभिमानितवान् । दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किल । एनं व्यामोहयामि । इति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीदथ तस्य पुरतः । स च तां

न बुबुधे। बुभुत्सया च तां स्वरूपं प्रदर्शय इति पप्रच्छ। सा च—अयं स शिङ्क्ते इत्येषा मद्देवता। तत्र प्रतीयमानं मत्स्वरूपं—इत्युपदिदेश। कथमत्रोभय-लिङ्गत्वम्। वस्तुत उभयलिङ्गत्वे कथं देवतैक्यं इति। उच्यते। अत्र उभयलिङ्गत्व-मुभयथा संभवति स्त्रीपुँल्लिङ्गद्वयेन मध्यमोत्तमलिङ्गद्वयेन च। तत्कथम्। अयं सः येन इति पुँल्लिङ्गवाचिना शब्दत्रयेण मेघः प्रतीयते। अधि श्रिता सा इत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक्। अत उभयलिङ्गत्वम् तथा विद्युद्भवन्ती इत्येवं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः। तथा सति वव्रिमौहत इत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्यादत्ते इत्ययमर्थो विवक्षितः। स च आदित्यव्यापार इत्युत्तमलिङ्गत्वम्। तर्हि वस्तुत उभयलिङ्गत्वप्रतीतेः उभे अपि देवते। यल्लिङ्गं सा देवता—इति न्यायात्। अतः कथमेकदेवतासिद्धिः इति। अयं सः येन इत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानां अधिष्ठानात्मिकाया एकत्वाश्रयणेन वा सर्वफलदात्रात्मन एकत्वाश्रयणेन वा देवतैक्योपपत्तेः। अनेन मध्यमोत्तमभेदेन उभयलिङ्गत्वपक्षेऽपि देवतैक्यमुक्तं भवति। अतः—एकैव वा महानात्मा देवता—इत्युक्तत्वात् वस्तुतो देवतैक्यं अधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुध्यते। अयं स शिङ्क्ते इयं सा माध्यमिकाया वाचः अधिष्ठात्री देवता शिङ्क्ते अव्यक्तध्वनिं करोति। येन गौरभीवृता। गौरिति वाङ्नाम। माध्यमिका वाक्। यया अभिवृता अभितो व्याप्ता। अधिष्ठिता इत्यर्थः। सा इयं शिङ्क्ते। अथवा अयं स शिङ्क्ते इति नैव माध्यमिका वाक् निर्दिश्यते। अपि तु मेघः। तस्यां वाचि शिञ्जानायां स एव शिङ्क्ते इति उपचर्यते। मञ्चाः क्रोशन्ति इति-वत्। अयं स मेघः शब्दं करोति येन माध्यमिका वाक् अभिव्याप्ता। शब्देन प्रकार एवोच्यते। मिमाति मायुं स्तनितलक्षणं शब्दं करोति। अथवा इयं लुप्तो-पमा। मिनोति स्वतेजः सर्वत्र प्रक्षिपति इति मायुः आदित्यः। तमिव अतिदीप्तं करोति इत्यर्थः। अथवा सामर्थ्यादात्मानं आदित्यसदृशं निर्मिमीते। कुत्र स्थिता। ध्वसनौ अधि श्रिता ध्वंसने मेघे अधिश्रिता। सा ईदृशी चित्तिभिः। कर्मनामैतत्। स्वकर्मभिर्वृष्टिरूपैः। मर्त्यं मरणधर्माणं स्थावरजङ्गमरूपं कृत्स्नं जगत्। नि हि चकार नीचैः करोति। मनुष्यान् प्रणतान् करोति। ओषध्यादिकं फलेन अवनतं करोति। अथवा चित्तिभिः द्योतनलक्षणैः कर्मभिः। विद्युति विद्योतमानायां सर्वे

जनाः भीत्या शिरांसि नतानि कुर्वन्ति । कथं भूता नीचैः करोति इति उच्यते । विद्युद्भवन्ती विद्युद्रूपतामा पद्यमाना प्रति वव्रिं औहत । वव्रिरिति रूपनाम । ऊहतिरत्र सामर्थ्यात् उपसंहारवाची । प्रत्युपसंहरति उदकलक्षणं रूपं पुनरादत्ते रश्मिद्वारा वृष्टमुदकं पुनर्घर्मकाले आदत्ते । एकस्यैव ज्योतिषः त्रेधाकरणात् विद्युतः सूर्यरश्मिभाव उपपद्यते ।

तमू अकृण्वन् त्रेधा भुवे कम् ।

इति वक्ष्यमाणत्वात् स्तनितस्य विद्युद्भावः मेघविद्युत्स्तनितानां अभेदाभिप्रायेण ॥

२९. अभिऽवृ॑ता-चि॒त्तिऽभिः-वि॒ऽद्युत्—इति पदपाढः ।

पयोभिः इत्युक्तम् । विचारप्रवृत्तिरपि स्वप्रज्ञाकारिता नैव हिताय । किंतु आचार्यप्रवर्तितैव । इति वक्तुं आचार्योपदेश उच्यते—अयं जीव एव सः स्वस्य परोक्षब्रह्मप्रतिपन्नः शिङ्क्ते एकान्ते उपदिशति । शिजि अव्यक्ते शब्दे । येन शिञ्जनकत्रा आचार्येण गौः श्रुतिः अभीवृता अनुप्रयोगादन्वर्था कृता । अन्यत्र ध्वसने शब्दे तद्देशे नासाग्रे च वर्तते यद्यपि तथापि प्रकृतानुपयोगादन्यार्थता । धुः इति मनुष्यनाम । अस्यति प्रेरयति इति असनः परः । द्वन्द्वसमासः । ध्वसनौ जीवपरौ । श्रिता विषयीकुर्वती । अधि अधिकं यथा तथा मिमाति बोधयति । कम् । मायुं मां प्रमितिमात्मने इच्छन्तं मायावन्तं वा । मतुपो लोपः । मायुर्वचसि मायायाम्—इति निघण्टुः । सा गौः चित्तिभिः चिन्तनाभिः निवर्तनीभिः युक्तिभिः विद्युदपरोक्षरूपा भवन्ती इति । प्रमाणजनितज्ञानस्यैव अविद्यानिवर्तकत्वादेवमुक्तम । कार्यकारणयोरभेदोपचारः । श्रुतिरेव प्रमाणमस्माकम् । श्रुतिजनितं ज्ञानमेव मननादिहीयमानसंशयादिदोषमपरोक्षं ज्ञानं भवति । अस्मिन् पक्षे अन्तःकरणवृत्तिज्ञानानां क्षणिकत्वनियमो नास्ति । सहानवस्थाननियमश्च नास्ति । तदुक्तं विवरणे—

श्रवणजनितबुद्धिः संशयादि प्रमृष्टा सुकृतमननमृष्टा नैव सा स्यात् परोक्षा ।
निकषति किमविद्यामप्रमाणं चरित्वा मतिषु च युगपत्त्वं स्थैर्यमिष्टं न यत्नैः ॥

इति । ननु अविद्यानिवर्तकं वृत्तिलक्षणं यज्ज्ञानं तन्निवर्तते न वा । न चेत् द्वैतं स्यात् । तन्निवर्तते चेत् तन्निवर्तकं ज्ञानान्तरं स्यात् । तथाच अनवस्था । इत्याशङ्क्य अविद्यानिवर्तकं परोक्षज्ञानं स्वत एव निवर्तते इत्याह—वव्रिं रूपं निवर्तकज्ञानस्य रूप स्वत एव प्रत्यौहत । प्रत्यूहो विघ्नः । व्यहन्यत स्वयमेवोपरमति । तदुक्तं वाचस्पतिना—

यथा कतकरजो रजोन्तराविले जले प्रक्षिप्तं रजोन्तराणि भिन्दत् स्वयमपि भिद्यमानं अनाविलं पयः करोति एवमपरोक्षमात्मज्ञानं अविद्यां निवर्तयत् स्वयमपि निवर्तमानं निरवद्यमात्मतत्त्वं अवशेषयति—इति । ननु अपरोक्षज्ञानाश्रितः प्रपञ्चः कथं तेन शिक्षनकर्त्रा आचार्येण दृश्यते व्यवहीयते च। तत्राह—विद्युद्वन्ती सा गौः मर्त्यं अनित्यप्रपञ्चं निचकार निराकरोत्। निकारो न्यक्कारः। अपरोक्षज्ञानेन मिथ्यात्वबोधमात्रं क्रियते न विनाशः। तेन दृशिव्यवहारः न लुप्यते। तथापि ज्ञान्यज्ञानिनोः प्रवृत्तिविशेषः अस्त्येव। यथा कश्चित् मृदा चण्डालपुत्तलौ द्वौ द्वे च कपिले कृत्वा द्वाभ्यां प्रयच्छति। तत्र तयोश्चण्डालकपिलाबुद्धयः मृद्बुद्धयश्च भवन्ति। तत्र एकस्य मृद्बुद्धिः प्रबला। तथा अन्यस्य चण्डालकपिलबुद्धिः। नासौ स्नाति मृन्मयचण्डालस्पर्शने। अथ च मृन्मयचण्डालकपिले पश्यति व्यवहरति च। यस्य तु चण्डालकपिलाबुद्धी प्रबले तस्य भ्रान्तिमूलो व्यवहारः अन्यथैव एवं प्रकृतेऽपि। इति न कश्चित दोषः। कल्पस्तु—

> जीवोऽप्ययं ब्रह्म भवेद्गुरुः स्यात् तदत्र वेदो वदतीशजीवौ।
> स युक्तिमृष्टो ह्यपरोक्षबोधः स्वं निर्मलीकृत्य वृथैव नश्येत ॥

इति ॥

इदं शरीरं जीवावस्थायाम्। अनेन देहस्य असारता जीवस्य नित्यत्वं च प्रतिपाद्यते ॥

> **अनच्छये तुरगातु जीव-**
> **मेजद्ध्रुवं मध्य आ पस्त्यानाम्।**
> **जीवो मृतस्य चरति स्वधाभि-**
> **रमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥**

**अनत्** प्राणनं कुर्वत् **जीवं** जीवनवत् **तुरगातु** स्वव्यापाराय तूर्णगमनं **सत् एजत्** तत् **शये** शेते वर्तते। पश्चात् प्राणापगमनानन्तरं उक्तविलक्षणं सत् **ध्रुवं** अविचलितं सत् **पस्त्यानां** गृहाणां **मध्ये आ** शेते च स्थाणुवत्तिष्ठति। आकारः पूरणो वा। जीवस्य वैलक्षण्यमाह—**मृतस्य** शरीरस्य संबन्धी **जीवः मर्त्येन** मरणधर्मकेण शरीरेण **सयोनिः** पूर्वं समानोत्पत्तिस्थानः। यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तद्भावात् तत्संबन्धेन उपचर्यते। तदेवाह—**अमर्त्यः** अमरणस्वभावः।

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते—इति श्रुतेः । उक्तस्वभावो जीवः **स्वधाभिः चरति** पुत्रकृतैः स्वधाकारपूर्वकदत्तैरन्नैः चरति । वर्तते इत्यर्थः ॥

३०. तुरऽगातु-सऽयोनिः—इति पदपाठः ।

व्यतिरेकेण पूर्वोक्तदृढत्वाय संसारी कथ्यते । सौकर्यायादौ द्वीतीयाधव्याख्या ; जीवः अङ्गीकृतजीवभाव आत्मा । मृतस्य नष्टस्य पूर्वपूर्वदेहस्य संबन्धिभिः स्वधाभिः । अन्ननामैतत् । उत्तरदेहभोगसाधनैः स्वधाभिः आत्मीयं भोगं दधद्भिर्वा धर्माधर्मसंस्कारैः चरति । चर गतिभक्षणयोः । विषयान् उपभुङ्क्ते । देहधर्मैः कथं देही लुप्यते तदभिमानात् इत्याह—सयोनिः सजन्मा देहादिजन्मादीनि आत्मनि मन्यमानः मरणादिधर्मवता देहेन्द्रियादिना सयोनिः । न च रूपादिवत् लोकायतिकचैतन्यवत् मदशक्तिवच्च देहेन सहोत्पत्तिरपारमार्थिकी शङ्कनीया इत्याह—अमर्त्यः देहधर्मैरपरामृष्टः । लोकायतिकेतरसर्वमते स्वात्मनो नाशे कृतनाशाकृताभ्यागमदोषप्रसक्तिः । लोकायतिकमतं तु—को ददर्श—इत्यत्र श्रुत्यैव भग्नं सर्वैर्दूषितं भ्राम्यति । ननु किमयं जीवः परात् भिन्नो न वा इत्याह—पस्त्यानां मध्ये त्रयाणां सावस्थानां कारणलिङ्गस्थूलानां देहानां मध्ये वर्तमानं ध्रुवं अचलं नित्यं ब्रह्मैव जीव उच्यते । कुतः । अनत् । अन प्राणने । प्राणधारणात् क्रियायोगात् । शये शिष्ये । शीङ् सुप्तौ । छान्दसो द्विर्वचनाभावः । छन्दस्युभयथा—इति सार्वधातुकत्वात् गुण. । छन्दसि लुङ्लङ्लिटः । सुषुप्तौ अज्ञानमात्रोपाधिकम् । ततः तुरगातु स्वप्ने तुरेण त्वरावता केवलेन मनसैव गमनशीलम् । ततो जागरे विषयवायुविक्षिप्तप्रायम् । एजत् सर्वतः कम्पते । दृढमेकरूपमपि अनाद्यविद्याया ईशाश्रिताया अंशे जीवज्ञानं कारणदेहस्थितं ब्रह्मजीवः सुप्तिवदिव भवति । ततः कारणदेहकार्ये लिङ्गे स्थितं जीवान्तरं स्वप्नवदिव भवति । ततो लिङ्गकार्यस्थूलदेहे स्थितं ब्रह्म जागरवदिव भवति जीवतमः । एवं ब्रह्मैव जीवः सदानादिस्थसहधर्मादिभिः चरति । स एव देहादिगुणवानिव । कल्पस्तु—

> मायाया एकदेशे धृतमपि परमं सुप्तिसज्जीवसञ्ज्ञं
> लिङ्गं तत्स्थूलजीवस्वपनयुगथ तज्जागरे स्थूलदेहे ।
> स्थूले स्थूलाख्यजीवव्यवहृतिपरिगो जीव एव प्रमत्तो
> धर्माद्यैः पूर्वसृष्टैर्भ्रमति स तु वृथा यावदात्मज्ञता स्यात् ॥

इति ॥

प्रवर्ग्ये अभिष्टवे—अपश्यं गोपाम्—इत्येका विनियुक्ता । सूत्रितं च—अपश्यं गोपामनिपद्यमानं स्रक्वे द्रप्सस्य—इति ।

**अपश्यं गोपामनिपद्यमानमा**
**च परां च पथिभिश्चरन्तम् ।**
**स सध्रीचीः स विषूचीर्वसान आ**
**वरीवर्ति भुवनेष्वन्तः ॥ ३१ ॥**

अहं **गोपां** सर्वस्य लोकस्य वृष्टिप्रकाशादिना गोपायितारम् । **अनिपद्यमानं** कदाचिदप्यविषण्णम् । तथा **पथिभिः** विचित्रैर्मार्गैः अन्तरिक्षरूपैः । **आ चरन्तं च परां** चरन्तं **च** उदयप्रभृति आमध्याह्नं आगच्छन्तं मध्याह्नप्रभृति आसायं पराङ्मुखं गच्छन्तम् । एवं महानुभावमादित्यं **अपश्यं** याथात्म्येन पश्येयम् । किंच **सः** आदित्यः **सध्रीचीः** सह अञ्चन्तीः । **सः विषूचीः** विष्वगञ्चन्तीः रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीः त्विषः **वसानः** आच्छादयन् । **भुवनेषु** भुवनैकदेशेषु लङ्कादिप्रदेशेषु **अन्तः** मध्ये । **आ वरीवर्ति** उदयास्तमयं कुर्वन् पुनः पुनरावर्तते । तमपश्यमित्यर्थः । एष वै गोपा एष हीदं सर्वं गोपायति—इत्याद्यस्मद्ब्राह्मणम् । अपश्यं गोपामित्याह असौ वा आदित्योः गोपा स हीमाः प्रजाः गोपायति—इत्यादि तैत्तिरीयकं च द्रष्टव्यम् ॥

३१. अनिऽपद्यमानम् पथिऽभिः-अन्तरिति—इति पदपाठः ।

एवं तावत् जीवजीवतरजीवतमादिरूपेण त्वंपदार्थगतान् विशेषानुक्त्वा तत्पदार्थगता विशेषा वक्ष्यन्ते । सन्ति च पञ्च चैतन्यावष्टम्भाः—

ईशो गुरुश्च जीवश्च तदन्तर्यामिसाक्षिकौ ।
चैतन्यस्कन्धकाः पञ्च मुक्तिरेतद्विवेचने ॥

इति महायोगशास्त्रे । अपश्यं पश्यामि । माहाभाग्यादृषिरेवमाह । गोपां गोप्तारमीशम् । अथ गुरुम् । अनिपद्यमानम् । पदनं संसारः । तदाख्यायां निशब्दः । ततो निवृत्तः । तमपश्यम् । गोपां इति । एष वै गोपाः—इत्याद्युपनिषद्ग्रन्थोऽप्येवमेव योज्यः । अथ जीवः । आचरन्तं धर्मं कुर्वाणं पराचरन्तं अधर्मं कुर्वाणम् । चकारौ अन्योन्यमिश्रधर्माधर्मार्थौ । यद्वा मर्त्यलोकमागच्छन्तं परलोकं च गच्छन्तम् । चकारात् आगच्छन्तं च । पथिभिः पुराणाद्युक्तमार्गैः । यद्वा देवयानः पितृयानः जायस्व म्रियस्व इत्येव तृतीयं स्थानं इति च तृतीयः पन्थाः । तैः ।

आपथयः—इत्याद्युक्तैर्वा । सापि ऋक् व्याक्रियते । केचिन्नरा आपथयः ब्रह्मविद्यामार्गिणः । अपरेविपथयः विरुद्धमार्गिणः पापिनः । अन्ये तु अन्तस्पथाः अस्पृष्टमार्गिणः । परे तु अनुपथाः अनुसृतमार्गिणः । भक्त्या देवतोपासकाः । अनुपथाः ऋजुमार्गिणः । एतैर्नामभिः निर्मितैमार्गैः रश्मिमतैर्मार्गैः । विस्तारयन्ति इति विष्टारो नाम मनुष्या मह्यं मां प्राप्तुं यज्ञं क्रियाकलापमूहन्ते वहन्ति । आह च वेदमित्रः—

ब्रह्मपापक्रियाभक्तिमार्गाश्चत्वार एव नः ।
पापवर्जा नरा एतैस्त्रिभिः श्रेयो वितन्वते ॥

इति । पापमार्गस्तु नानुष्ठेयः इति । प्रतिपाद्यमानश्रेयोहेतुरिति भावः । अथान्तर्यामी । स एव परमात्मा । सध्रीचीः । सह अञ्चति इति । सन्ध्याक्रियादौ देवताभिः सह अञ्चिताः पूजिताः दिशः । प्राच्यै दिशे नमः—इत्यादिभिर्मन्त्रैः वसानः स एव विषूचीः विगतगतीः कोणगतीरवान्तरदिशश्च वसानः नियच्छन् अन्तर्यामी इत्युच्यते । यस्तु वस्त्राणि वस्ते आच्छादयति तान्यसौ अवश्यं नियमयति इति दृष्टम् । दिगुक्ता हि जीवाः नियम्या अभिप्रेताः । अथ साक्षी । आवरीवर्ति आवृणोति अतिशयेन । भुवनेषु जगत्सु अन्तः मध्ये यद्यत्तत्सर्वमावरणं चैतन्यात् इति तत्प्रकाशकः साक्षी उक्तः । तन्नास्त्येव यत् साक्षिणा अप्रकाशितम् । सर्वं हि वस्तु ज्ञाततया अज्ञाततया साक्षिचैतन्यस्य विषय एव । सर्वोपाधिविशिष्टेषु अवशेषितं उपलक्षितं चैतन्यं साक्षी इत्याहुः । कल्पस्तु—

ईशो गुरुर्जीव उदीरितोऽन्तर्यामी च साक्षी परमात्मभेदाः ।
बोधोपदेष्टा भुवनेषु गन्ता स चोदको वेदक एष एकः ॥

इति ॥

**य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।**
**स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥ ३२ ॥**

अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहाराय आत्मा ज्ञातव्यः इति अर्थात् प्रतिपाद्यते । **यः** पुमान् पुत्रार्थी **ईं** एनं गर्भं **चकार** करोति विक्षिपति वा तत्कारणभूतस्य विक्षेपद्वारेण **न सः** पुमान् **अस्य** तत्त्वं **वेद** । कर्मणि षष्ठी वा । एनं गर्भं न जानाति । कथंभूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानाति इत्यर्थः । **यः** च **ईं** मातुरुदरस्थं **ददर्श** उदरवृद्ध्यन्यथानुपपत्त्या अनुमानेन वा

ददर्श **तस्मात्** द्रष्टुः सकाशात् सः **हिरुक् इत् नु** । हिरुक् इति अन्तर्हितनाम । इच्छब्द एवकारार्थः । नु निश्चये । अत्यन्तमन्तर्हित एव खलु । यद्वा यः संसारावस्थायां ईं एनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सः अस्य एतत् न वेद लोकान्तरे जन्मान्तरे वा । तथा यः ईं एनं ददर्श गिरिनदीसमुद्रबन्ध्वादिकं ददर्श जीवनसमये तस्माम् दृष्टात् हिरुक् इत् नु पृथगेव । अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वा अनुभवति इत्यर्थः । **सः** तादृशः **मातुः** जनन्याः **योना** योनौ **अन्तः परिवीतः** उल्वजरायुभ्यां परितो वेष्टितः सन् । **बहुप्रजाः** बहुजन्मभाक् । अथवा उत्पन्नः सन् स्वयमप्यपत्योत्पादनेन बहुप्रजाः । एवं गर्भदुःखं अनुभवन् **निर्ऋतिं आ विवेश** निर्ऋत्यभिधानं प्रदुःखं अनुभवति यावत् स्वरूपभूतात्मज्ञानम् । अतः तत्परिहाराय आत्मा ज्ञातव्यः इत्युक्तं भवति । एवमात्मविदामभिप्रेतोऽर्थः ।

नैरुक्तानां तु मते—य ईं चकार मध्यस्थानो वायुर्मेघो वा एतद्वृष्ट्युदकं करोति सः अस्य । तत्त्वमिति शेषः । अथवा एतत् कर्म । न जानाति । तयोरचेतनत्वादिति भावः । यस्तु ईं एतत् ददर्श पश्यति तस्मादपि हिरुक् अन्तर्हितः । प्राणिकर्मवशेन काले वर्षिता परमेश्वरः आदित्यात्मनि गूढः इत्यर्थः । यः ईं हिरुक् अन्तर्हितं एतत् ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुः निर्मातुरन्तरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूते अन्तरिक्षे । उभयोरप्यन्तरिक्षनामत्वात् सामान्यविशेषभावो द्रष्टव्यः । अन्तरिक्षैकदेशे योन्यां अन्तः मध्ये बहुप्रजाः बहुप्रजातान्नः बहुप्राण्युपकारी । अथवा जनिरत्र अन्तर्भावितण्यर्थः । बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन् । निर्ऋतिं निरमणसाधनां भूमिं आ विवेश प्रविशति । प्राप्नोति इत्यर्थः ॥

३२. परिऽवीतः-बहुऽप्रजाः-निःऽऋतिम् इति पदपाठः ।

प्राक्प्रतिपादितात्मज्ञानादेव मोक्षः न कर्मणा नापि समुच्चयेन इति वक्तुं ज्ञानकर्मसमुच्चयनिराकरणम् । य ईं इदं कर्म करोति स नैवास्य ईं इममात्मानं वेद वेत्ति । यस्तु ईं इमं आत्मानं पश्यति स पुरुषः तस्मात् कर्मकर्तुः सकाशात् हिरुक् नु पृथगेव । कर्तृकरणबुद्ध्योः युगपदेककर्तरि विरोधात् । यस्तु एते न्यायादिविरुद्धे ज्ञानकर्मणी मोक्षे समुच्चिते

मन्यते स उभयभ्रष्टः मातुर्योनौ गर्भे स्यात्। सर्वगतोऽपि परिवीतो वस्त्रादिना अन्तश्च अविद्यादिना परिवीतः बहूनां प्रजाः पुत्रत्वेन अनेकजन्मवान्। अन्तोदात्तत्वात् तत्पुरुषः। अर्थातिशयाच्च। अन्ये तु बहुव्रीहावपि—बहुप्रजाश्छन्दसि—इति निपातनात् स्वरसिद्धिमाहुः। निर्ऋतिं मृत्युं आविवेश आविशति। कल्पस्तु—

> यः कर्मकर्ता न स आत्मवेदी य आत्मवेदी स पृथक्कृती स्यात्।
> एकत्र कर्तर्युभयं विरुद्धं मृत्युं व्रजेदित्यपमन्यमानः॥

इति॥

**द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्।**
**उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात्॥ ३३॥**

दीर्घतमा ब्रवीति। **मे** मम **द्यौः** द्युलोकः **पिता** पालकः। न केवलं पालकत्वमात्रम्। अपि तु **जनिता** जनयिता उत्पादयिता। तत्रोपपत्तिमाह—**नाभिः अत्र** नाभिभूतो भौमो रसः अत्र। तिष्ठति इति शेषः। ततश्च अन्नं जायते। अन्नाद्रेतः। रेतसो मनुष्यः। इत्येवं पारम्पर्येण जननसंबन्धिनो हेतोः रसस्यात्र सद्भावात्। अनेनैवाभिप्रायेण जनिता इत्युच्यते। अत एव **बन्धुः** बन्धिका। तथा **इयं मही** महती **पृथिवी मे माता** मातृस्थानीया। स्वोद्भूतौषध्यादिनिर्मात्री इत्यर्थः। किंच **उत्तानयोः** ऊर्ध्वतनयोः। **चम्वोः** सर्वस्य अव्योः भोगसाधनयोः द्यावापृथिव्योः **अन्तः** मध्ये **योनिः** सर्वभूतनिर्माणाश्रयमन्तरिक्षम्। वर्तते इति शेषः। **अत्र** अस्मिन्नन्तरिक्षे **पिता** द्युलोकः। अधिष्ठात्रधिष्ठानयोरभेदेन आदित्यो द्यौरुच्यते। स्वरश्मिभिः। अथवा इन्द्रः पर्जन्यो वा। **दुहितुः** दूरे निहितायाः भूम्याः **गर्भं** सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणम्। **आ अधात्** सर्वतः करोति॥

सगुणब्रह्मविद्यायां तु ज्ञानकर्मसमुच्चयो युक्त एव इति वक्तुं कांचन सगुणब्रह्मविद्यामाह—या द्यौः सैव मम पिता तथा जनिता सैव मम नाभिः सनाभिः सहोदरा स्वसा। जनं कश्यपं इता जनिता। तारकादित्वात् इतच्। जनो हि कश्यपो यदजीजनज्जगत् इति भृगुर्वारुणिः। यद्वा जनं कश्यपं इयति इति कर्तरि निष्ठा। तृचि ङीष्प्रत्ययः। अत्र जगति यो बन्धुः भ्राता अग्निर्वा सोमो वा स एव ममापि बन्धुर्भ्राता। भृगुः शशी।

देहेन सह जायेते सोमाग्नी भ्रातरौ विदुः ।
तयोरन्यतरच्छेदे वेदः पतति सर्वथा ॥

इति योगमित्रः ।

या पृथिवी सैव मम माता मही इयं गोर्नामष्ट ।
या मही कामधेनुरधिदैवं सैव मम गृहे इयं गौः ॥
द्यौर्नः पिता ॥
पृथिवी माता ॥

इति च मन्त्राभ्यां एतत् सर्वं सूचितम्। द्यौर्मे पिता—इत्यादिरूपेण ध्यायेत् इति विधिकल्पना। यथा द्रव्यदेवतासंबन्धाद्विधिः कल्प्यते एवं अर्थवादे वेदभागे वेद्य दर्शनाद्विधिकल्पना। वेद्यं हि विद्यायाः स्वरूपम्। न च—अस्य वामस्य पलितस्य होतुः इति वैश्वदेवम्—इति वैश्वदेवशंसनशेषता। तत्प्रयोगे तथात्वं अस्तु। इह हि ज्ञानमोक्षाक्षरप्रशंसा इत्युच्यते। अतः स्वातन्त्र्यमेतेषां मन्त्राणाम्। यदि केनचिद्विधिना अवच्छिद्य कस्मिन्नप्यर्थे विनियुज्यते तदा तत् स्वातन्त्र्यं तच्छेषार्थम्। अत्रापि यदा जपपारायणादौ विनियोगः तदा स्मार्यस्य प्रयोगसमवेतस्य अर्थस्याभावात् अध्यात्मपरता उचिता। अन्यच्च यदत्र किंचिद्वक्तव्यं तत् सर्वमूह्यम्। तत्र ध्यानान्तरं समुच्चिनोति। उत्तानयोः अन्योन्याभिमुखयोः चम्वोः। अध्यात्मपक्षे ऊर्ध्वाधोदेहभागयोः। अधिदेवतापक्षे तु ब्रह्माण्डस्य ऊर्ध्वाधोभागयोः। अन्तः मध्ये योनिः जगद्बीजं ईश्वरः अस्ति। तदुक्तम्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इति। अध्यात्मपक्षे तु हृद्युपास्यो जगद्धेतुः देहेन्द्रियादिप्रवर्तकः ईशः अस्ति। अधिदैवपक्षे तु क्षीरसागरशायी नारायणो जगद्योनिः प्रसिद्धोऽस्ति। अत्र जगद्योनावीश्वरे नारायणे बहिर्निर्गतरूपो जगत्पिता चतुर्मुखाख्यो ब्रह्मा जातः। स च स्वदुहितुः सरस्वत्याः योनौ अन्तः वीर्यं आहितवान्। तस्माद्वीर्यात् सर्गविशेषः इति। प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्—इत्यत्र खण्डे अयमर्थः स्पष्ट उक्तः। अध्यात्मपक्षे तु अत्र हृदयस्थे देहादिप्रापके जगद्योनौ ईश्वरे बहिर्निर्गतरूपश्चतुर्मुखस्थानीयः पिता तृतीयजन्मदातृत्वेन ममायं पिता इति शिष्यैर्भावितो ब्रह्मविद्याचार्यः ब्रह्मा अनुरूपं अन्तस्तत्त्वं गर्भं अधात्। अन्तर्भावितोऽत्र ण्यर्थः। आधापितवान् आधारयत्। अस्खलितमचीकरद्वा। आरोपितवान् वा। डुधाञ् धारणपोषणयोः। अनेन पिण्डब्रह्माण्डयोः जीवपरयोश्च

ऐक्यं सूचितम्। देहोऽपि ब्रह्माण्डः। तदाह श्रुतिः—पुरुषो ह वा अयं सर्व आन्दः—इत्यादिना खण्डसमाप्तिपर्यन्तेन ग्रन्थेन। एतद्विद्याफलं तु कश्यपसंहितोक्तं ज्ञेयम्—

ब्रह्मविद्याप्रसङ्गोक्तविधानं ज्ञानतः फलम्।
ब्रह्मविद्यासमुत्पत्तिरनुक्तं चेत् फलान्तरम्॥

इति। वामनस्त्वाह—

न ब्रह्मलोकसंप्राप्तिरहंग्रहमृते भवेत्।
अन्यत्रोक्तं फलं कल्प्यं प्रत्यभिज्ञा फलं यदि॥
अनारभ्योक्तविद्यानां न्यायशास्त्रफलं विदुः।
अङ्गाच्च ब्रह्मविद्यानां कर्मसंपत् फलं विदुः॥
अङ्गाच्च ब्रह्मविद्यासु प्रोक्तं फलमति व्रजेत्।
प्रणयाश्रितगोदोहफलं यत् पृथगिच्छताम्॥

इति। कल्पस्तु—

नाको मे जनको दितिर्भगिनिका सोमानिलौ भ्रातरौ
माता भूः सुरधेनुका गृहगवीत्येवं विचिन्त्यं ततः।
देहार्धद्वयमध्यचित्तु दुहिता गर्भे पितुर्ब्रह्मदात्
तत्त्वं स्वाकृतिविष्णुनाभिजनितादाधात् सरस्वत्यथ॥
ध्यायेदेवं ततः पिण्डे जीवेशौ न पृथक् स्मरेत्।
एवं चिन्तयतो ब्रह्मविद्योदेति विमोचिनी॥

इति॥

आश्वमेधिके मध्यमे अहनि ब्रह्मोद्ये होत्रादयः—पृच्छामि—इत्यनया यजमानं पृच्छेयुः। तथा च सूत्रितम्—एकैकशो यजमानं पृच्छति पृच्छामि त्वा परमन्तं पृथिव्याः—इति।

**पृच्छामि॑ त्वा॒ पर॒मन्तं॑ पृथि॒व्याः पृच्छा॑मि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑।**
**पृच्छामि॑ त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॒ पृच्छा॑मि॒ वा॒चः प॑र॒मं व्यो॑म॥३४॥**

हे यजमान **त्वा** त्वां **पृच्छामि** प्रश्नं करोमि। किम्। **पृथिव्याः परं अन्तं** उत्कृष्टां काष्ठाम्। यत्र सर्वा पृथिवी समाप्यते तत् पृच्छामि। तथा त्वां

अन्यत् **पृ॒च्छामि॑**। किं तत् इत्युच्यते। **यत्र॒ भुव॑नस्य** भूतजातस्य **नाभि॑ः** संनाहः बन्धनम्। यत्र सर्वं संनद्धं भवति तं इत्यर्थः। किंच **त्वा॒** त्वां **वृष्ण॑ः** वर्षकस्य **अश्व॑स्य** व्याप्तस्यादित्यस्य। असौ वा आदित्यो वृषाश्वः—इति तैत्तिरीयकम्। तस्य **रेत॑ः** रेतोवत् कारणम्। तत् किमिति **पृ॒च्छामि॑**। तथा **वा॒चः** सर्वस्य वाग्जातस्य **प॒र॒मं** निरतिशयं **व्यो॑म** स्थानम्। सर्वस्य वचसः कारणम्। **पृ॒च्छामि॑**। एतत् प्रश्नचतुष्टयं पृच्छामि ॥

३४. विऽओम—इति पदपाठः।

प्रासङ्गिकनिवृत्तये पुनः प्रकृतानुसन्धानाय च चतुरः प्रश्नानाह—जीवरूपेण परमात्मदृष्टिरहं त्वा परमात्मरूपमीशं पृच्छामि पृथिव्या देव्याः महत्या मायाया अन्तं निवर्तकम्। प्रलयव्यावृत्त्यर्थमाह—परमात्यन्तिकं तथा पृच्छमि। यत्र कारणे सति भुवनस्य प्रपञ्चस्य नाभिर्वाहनं बन्धनमविश्लेषणम्। तत्कारण पृच्छामि। महामायायाः साधारण्यात् जगद्वैचित्र्यजनकमसाधारणं कारणं पृच्छामि इत्यर्थः। तथा पृच्छामि त्वां वृष्णो देहेन्द्रियादिस्वामिनो जीवस्य यः अश्वः इन्द्रियम्।

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।

इति श्रुतेः। तच्च इहान्तरं मनः सर्वेन्द्रियाण्यश्नुते व्याप्नोति। बलवत्त्वाच्च वेगवत्त्वाच्च तस्याश्वस्य मनसो रेतो रयणम्। रीङ् गतौ। स्त्रीभ्यां तुट् च। चरमधातुवर्शा-च्चेष्टते—इति गर्भोपनिषदुक्तेश्च। उदकनामैतत्। आप्यायकमश्वं स्वमनसश्चेष्टकं चेतनं पृच्छामि इत्यर्थः। तथा वाचो वेदात् परमं हरम्। परं ब्रह्मेति केचित्। तच्चिन्त्यम्। व्योम विशेषेण अवितृ रक्षकं पृच्छामि। अवितृ चेत् कथं वाचः परमं निर्गुणम्। वाचः परमं निर्गुणं चेत् कथमवितृ। छान्दसं संप्रसारणम्। ओणेर्वा णिलोपः। ओणृ अपनयने। यतो निर्गुणशंसनं संसारापनेतृ पृच्छामि। कल्पस्तु—

मायानिवर्तकं किं स्याद्वैचित्र्यं किं निबन्धनम्।
मनसः प्रेरक किं स्यात् श्रुतेर्दूरः क ईश्वरः ॥

इति ॥

अथैवं पृष्टो यजमानः—इयं वेदिः—इत्यनया प्रतिब्रूयात्। इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह—इति सूत्रितम्।

**इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।**
**अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥**

**पृथिव्याः** प्रथनवत्या भूम्याः **परः अन्तः** परमन्तं पर्यवसानं **इयं वेदिः** । न हि वेद्यतिरिक्ता भूमिरस्ति । एतावती वै पृथिवी यावती वेदिः—इति श्रुतेः । तथा **अयं यज्ञः भुवनस्य** भूतजातस्य **नाभिः** संनहनम् । तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात् । अथ **वृष्णः** वर्षकस्य **अश्वस्य** आदित्यस्य **रेतः अयं सोमः** रसात्मकः । अग्नौ हुतः सोमरसः आदित्यं प्राप्य वृष्ट्यादि फलं जनयति । **अयं ब्रह्मा** प्रजापतिरेव **वाचः** मन्त्रादिरूपायाः **परमं व्योम** उत्कृष्टं रक्षकं स्थानम् । तत्रैवोत्पत्तेः तत्रैव पर्यवसानात् ॥

३५. विऽओम—इति पदपाठः ।

उत्तराण्युच्यन्ते । इयं ब्रह्मवित्सु प्रसिद्धा वेदिः ब्रह्मानुभूतिः पर आत्यन्तिकः अन्तः हेतुः पृथिव्या मायायाः । तथा अयं सर्ववादिप्रसिद्धः यज्ञः । अजहल्लक्षणया धर्माधर्मसंस्कारात्मकपुण्यपापराशिः भुवनस्य प्रपञ्चस्य विश्लेषकारकः असाधारणो हेतुः । तथा अयं प्रसिद्धः सोमः जगदीश्वरः जीवः सन् प्रेरकः वृष्णो जीवस्य यः अश्वः मनः तस्य रेतः । ब्रह्मा ब्रह्मीभूतः चतुर्मुखो विष्णुर्वा ।

आचार्यो ब्रह्मणो मूर्तिः ।

इति स्मृतेः । भृगुशप्तत्वात् ब्रह्मणो विष्णुशिववत् साक्षात् पूज्यत्वाभावात् गुरुरूपेण पूज्यत्वाच्च अयं प्राकृतो ब्रह्मा ब्रह्मविद्यागुरुरेव । वाचः वेदात् परमं दूरं व्योम परमन्तं ब्रह्म परमार्थतः । शिष्यभाग्यवशाच्च विशेषेण अवितृ संसारापनेतृ च । कल्पस्तु—

मायानिवृत्त्यै स्वनिजैक्यबोधो धर्मादिसंस्कारशुभैर्विशेषैः ।
ईशो हि जीवस्य मनोविनोदी वेदात् परं ब्रह्म गुरूदितं स्यात् ॥

इति ॥

**सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।**
**ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥**

**सप्त** सर्पणस्वभावाः सप्तसंख्या वा रश्मयः । **अर्धगर्भाः** संवत्सरस्यार्धे गर्भे गर्भस्थानीयं उदकं धारयमाणाः । यद्वा ब्रह्माण्डस्यार्धे मध्ये अन्तरिक्षे गर्भवद्वर्तमानाः । **भुवनस्य** लोकस्य **रेतः** सारं वृष्टिप्रदत्वेन रेतोभूताः । तादृशा रश्मयः **विष्णोः** व्यापकस्य आदित्यस्य **विधर्मणि** जगद्धारणव्यापारे **प्रदिशा** प्रदेशेन **तिष्ठन्ति** वर्तन्ते । किंच **ते धीतिभिः** प्रज्ञाभिः **ते मनसा** जगदुपकारः कर्तव्यः इति बुद्ध्या च । **विश्वतः** सर्वतः । द्वितीयार्थे तसिः । विश्वं **परि भवन्ति** परितो भावयन्ति । कृत्स्नं जगत् व्याप्नुवन्ति इत्यर्थः । यस्मादेवं तस्मात् ते एव **विपश्चितः** बुद्धियुक्ताः **परिभुवः** सर्वत्र व्याप्ताश्च । यद्वा सप्तार्धगर्भाः सप्त महदहंकारौ पञ्च तन्मात्राणि इति मिलित्वा सप्तसंख्यानि तत्त्वानि अर्धगर्भा अविकृतिरूपाः । विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्य आत्मनश्च उत्पन्नत्वात् अर्धांशेन प्रपञ्चाकारेण परिणामात् अर्धगर्भाः । पुरुषांशस्याविक्रियत्वात् इत्यभिप्रायः । अत एव तेषां प्रकृतिविकृतित्वम् । यस्मादेवं तस्मात् भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत् समानम् ॥

३६. अर्धऽगर्भाः-प्रऽदिशा विऽधर्मणि-धीतिऽभिः-
विपःऽचितः-परिऽभुवः—इति पदपाठः ।

परमे व्योमन् यस्य वक्ष्यमाणज्ञानकथनेन इत्याह—सप्त अर्धगर्भाः अर्धकायाः अर्धकारणरूपाः । प्रकृतयो विकृतयश्च इत्यर्थः । भुवनस्य षोडशकस्य प्रकृतिविकारस्य रेतः कारणम् । विष्णोः प्रदिशा आज्ञयैव तिष्ठन्ति प्रवर्तन्ते । चेतनासहायजडानां प्रवृत्त्यनुपपत्तेः । विधर्मणि विरुद्धधर्मवत्याम् । ते च उक्ताः चतुर्विंशतितत्त्वात्मकाः पदार्थाः । धीतिभिः धार्यमाणैः अविनश्वरैः धर्माधर्मसंस्कारैः ते त्वया मनसा चेतसा च युक्ताः परिभुवः परिभवनधर्माः । विश्वतः । ल्यब्लोपे पञ्चमी इयम् । सर्वशास्त्राणि विज्ञापयन् विपश्चितोऽपि पुरुषान् परिभवन्ति संसारयन्ति । कथम्—ते—इत्यत्र—त्वया—इत्युक्तम् । जस्पर एव तेशब्दः प्रसिद्धः । उदात्तश्च तेशब्दः । अतः तच्छब्दप्रकृतिकः । अत्र अव्ययवृत्तिकारोक्तमुत्तरम्—

तेमेशब्दावुदात्तौ चेत् तृतीयाथ स्वरादिषु ।
अनुदात्तावपादादावन्वादेशे च ङेङसोः ॥

इति । साङ्ख्यशास्त्रसमुत्थापकोऽयं मन्त्रः । तदुक्तं साङ्ख्यशास्त्रे—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इति उपन्यस्य साङ्ख्यशास्त्रमिह दूषितं विज्ञेयम् । विष्णोः प्रदिशा तिष्ठन्ति इति । विष्णाति स्नुह्यति स्निह्यति विश्नोति अज्ञानलक्षणं विषं नुदति इति वेवेष्टि इति नोदनात् विशति इत्यादिधातुभ्यः विष्णुशब्दः साधितो विष्णुपदसिद्धौ मयैव । नुडुप्रत्ययान्ता एते । विषस्य लोपः । आदिशब्दाद्वदति । विष्णोते वन्दते वदन्ति इत्यादयोऽपि इष्णुन्-प्रत्ययान्ताः । विशति वेष्टयति इति च ।

कारकेषु तु भावे स्यादिति व्युत्पत्तिसप्तकम् ।
कालत्रयेण तद्भेदादेकविंशतिरूपकम् ॥

प्रागुक्तधातुभ्यः कर्मकर्तृकरणेषु बहुलवचनात् संप्रदानापादानयोर्भावे इत्येवं सप्त व्युत्पत्तयः । ताश्च कालत्रयभेदात् एकोनविंशतिधा भिद्यन्ते ।

एवं व्युत्पत्तयो विष्णावसंख्यातमुदीरिताः ।
सर्वशब्दार्थको विष्णुशब्दो विष्णावुदीरितः ॥

इत्यलमतिप्रसङ्गेन । कस्पस्तु—

सप्तार्धगर्भा कृतषोडशापि विष्णावजा तिष्ठति मूलहेतौ ।
सत्त्वानि धर्मादिभिरुज्ज्वलानि संसारयन्त्येव विपश्चितोऽपि ॥

इति ॥

**न वि जा॑नामि॒ यदि॑वे॒दमस्मि॑ नि॒ण्यः संन॑द्धो॒ मन॑सा चरामि ।**
**य॒दा मार्ग॑न् प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः ॥ ३७ ॥**

अहं **यदि॑व इदं** यदपीदं विश्वं **अस्मि** कृत्स्नः प्रपञ्चोऽपि अहमेवास्मि । नामरूपांशमपरमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्मि । योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मि इति **न वि जा॒ना॒मि** विविच्य नाज्ञासिषम् । परं शास्त्रजनितं इदमहमस्मि इति ज्ञानं जातम् । अविवेकी अहमित्यर्थः । कार्यकारणयोरभेदात् । कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति । इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं स ईक्षत बहु स्यां प्रजायेयेत— इत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । तदनन्यत्वमारम्भणशब्दा-

दिभ्यः—इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् । यद्वा इवशब्द उपमार्थ एव । यदिव यत् परोक्षज्ञानं सर्वैकात्म्यरूपं आनुभाविकमस्ति तदिव तद्वदेवाहमस्मि । इदं सर्वमहमस्मि—इति ज्ञानं मे जातम् । अपितु एतद्दार्ष्टान्तिकभूतम् । आनुभाविकं सार्वात्म्यं यदस्ति तन्न विजानामि न प्राप्तोऽस्मि । शास्त्रजनितं सार्वात्म्यं जातम् । न तु आनुभाविकं इत्यर्थः । तत्र कारणमाह—यतोऽहं **निण्यः** । अन्तर्हितनामैतत् । अन्तर्हितो मूढचित्तः । चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्न इत्यर्थः । तत्रोपपत्तिमाह—**संनद्धः** अविद्याकामकर्मभिः सम्यग्बद्धः वेष्टितः । अत एव **मनसा** युक्तः भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः । **चरामि** संचरामि संसारे । अथवा मनसा संनद्धः चरामि । इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि । न सार्वात्म्यं जानामि इति परिदेवते । यास्कोऽपि इमं परिदेवनार्थत्वेन उदाजहार—अथापि परिदेवना कस्माच्चिद्भावात् न विजानामि यदिवेदमस्मि—इति । बहिर्मुखचेतसः स्वरूपापरिज्ञानं जनितं दुःखं अन्यत्र श्रूयते ।

पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ॥

इति । तर्हि कदा एतद्भवति इत्याह—**यदा आ अगन्** आगमिष्यामि तदा । किं तत् इत्युच्यते—**ऋतस्य** परमार्थस्य परस्य ब्रह्मणः **प्रथमजाः** प्रथमोन्मेषः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितोऽनुभावः । स यदा **मा** मां प्राप्नोति । **आत् इत्** अनन्तरमेव अव्यवधानेन **अस्याः वाचः** ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचः यदिवेदमस्मि—इत्युक्ताया वा **भागं** भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदं **अश्नुवे** प्राप्नोमि । चित्तस्य बहिर्मुखतां परित्यज्य अन्तर्मुखतैव दुःसंपादा । सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति । पश्चाद्विलम्बाभावात् यथा गिरिशिखरात् पतन् पाषाणोऽविलम्बेन पतति तद्वत् । चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते ।

कश्चिद्धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन् ॥

इति ॥

३७. यत्ऽईव-संऽनद्धः-प्रथमऽजाः—इति पदपाठः ।

कीदृशः परिभवः। कथं च तन्निवृत्तिः इत्यत्रोच्यते। महाभाग्ययोगाद्दीर्घतमा एव तत्स्वरूप इव भूत्वा आह—न विजानामि जानन्नपि विशेषेण न वेद्मि इदं जगत् यदिव यदीये सत्त्वचित्त्वे गृहीत्वा। यदि वा चिदिव अवभाति। अहं च यदिव अस्मि तन्न विजानामि। तत्र हेतुः। निण्यः श्रुत्यादिभिर्निर्णीतोऽपि अविद्यया आच्छादिन्या अन्तर्हितोऽहम्। ण्यत् शब्दः। तलोपः छान्दसः। निण्यः निर्णीतः। अन्तर्हितनामधेयम्। ततः सन्नद्धः सम्यक् बद्धः। केन। मनसा सङ्कल्पविकल्पात्मना पुण्यपापसंस्कारहेतुना। ततः चरामि ऊर्ध्वाधोमध्ये चरामि विषयान् उपभुञ्जे वा। यदा यस्मिन् काले मां प्रति आगन् आगच्छन्ति। प्रथमजाः ब्राह्मणाः सनकादिसमाश्च। आदित् अनन्तरमेव ऋतस्य ब्रह्मणः संबन्धिन्याः अस्याः प्रकृतायाः ब्रह्मविद्यारूपिण्याः वाचः श्रुतेः भागं भजनीयं अश्नुते प्राप्तवानस्मि। कल्पस्तु—

आदाय सच्चित्त्वमिदं यदीयं सच्चिद्ववेत्तन्न हि वेद्मि तेन।
बद्धो यदा मामगमन्महान्तो ब्रह्मा तदैवाविदमित्युवाच॥

इति॥

**अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।**
**ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम्॥३८॥**

**अमर्त्यः** अमरणधर्मा अयमात्मा **मर्त्येन** मरणधर्मणा भूतात्मना देहेन **सयोनिः** समानस्थानः। यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठति इत्यर्थः। यद्वा समानोत्पत्तिः। सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते। एवंभूतः सन् **स्वधया** अन्नोपलक्षिततद्भोगेन **गृभीतः**। यद्वा स्वधाशब्देन अन्नमयं शरीरं लक्ष्यते। तेन गृहीतः सन् **अपाङ् एति** अशुक्लं कर्म कृत्वा अधो गच्छति। **प्राङ्** एति ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। परमात्मैव सूक्ष्मशरीरोपाधिकः सन् नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण संबद्धः लोकान्तरेषु संचरति। स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते—

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः॥

इति । इदानीं उभयप्राधान्येनाह—**ता** तौ भूतात्मकर्त्रात्मानौ **शश्वन्ता** अविभागेन सर्वदा वर्तमानौ । यद्वा सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते । स्थूलशरीरपक्षेऽपि सात्त्विकजातेः । तत्कारणानां भूतसूक्ष्माणां सद्भावात् तत्र शरीरसंबन्ध उपपद्यते । **विषूचीना** इह लोके सर्वत्रगमनौ **वियन्ता** तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते । तत्र नरा **अन्यं** भूतात्मानं **नि चिक्युः** नितरां विशेषेण पश्यन्ति जानन्ति । **अन्यं** अपरं देहवच्छायातिरिक्तं **न नि चिक्युः** न जानन्ति । केचन पामराः देहव्यतिरिक्तं न जानन्ति । केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते । न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति । अतो दुर्लभमात्मज्ञानं इत्यर्थः ॥

३८. सऽयोनिः-विऽयन्ता— इति पदपाठः ।

ननु अज्ञानाद्बन्धो ज्ञानान्मोक्षः इत्यवोचः । तर्हि ज्ञानाद्भवेन्मोक्षो जीवतो न वा । आद्ये जीवन्मुक्तलक्षणं वाच्यम् । द्वितीये ज्ञानादेव मोक्ष इति नियमो न । किंतु ज्ञानमरणाभ्यां मोक्षः इति स्यात् । तत्राह जीवन्मुक्तलक्षणम्—अपाङ् । अप निकृष्टं अञ्चति इति क्वचित् अपकृष्टाधर्मशील इव लक्ष्यते । प्राङ् । क्वचित् प्रकृष्टं धर्ममाचरन्निव लक्ष्यते । तथापि अस्य न पुण्यपापसंबन्ध एति अपगच्छति । यतः एति च । स्वधया ब्रह्मविद्यया । न ब्रह्मविद्यावतः पुण्यपापसंबन्धः । स्वया ब्रह्मविद्यया धीयते । अथवा स्वं दधाति इति स्वधः परमात्मा । तं याति प्रापयतीति । क्विन् । तृतीयैकवचनम् । आतो धातोः । अवग्रहाभावे हेतुरुक्त एव । रुढिशङ्का च जीवन्मुक्तौ न दृश्यते इति केचित् । मर्त्येन स्थूलदेहेन गृभीतः संबद्धः । दुर्ग्रहः संबन्धश्चेत् तर्हि इतरेभ्यः अस्य को भेदः । तत्राह—अमर्त्यः स्वयं न म्रियते कारणदेहच्छेदेऽपि विशीर्यमाणे लिङ्गदेहेऽपि स्थूलदेहानुवृत्तेः । उक्तं च योगशास्त्रे—

> कुलालचक्रकं यद्वच्छिन्नमूलोऽङ्कुरो यथा ।
> यद्वच्छरस्तथाज्ञानच्छिन्नोऽप्यास्ते भवः सताम् ॥

इति । यतः सयोनिः ससंस्कारः । संस्कारोऽपि कारणत्वाद्योनिरुक्तः । यद्वा सयोनिरिव कदाचित् ग्रहस्थाश्रमसहित इव । उपलक्षणत्वात् वर्णाश्रमधर्मवानिव । ननु जीवन्मुक्तस्थितिरुक्ता न जीवन्मुक्तलक्षणम् । तत्राह—तानि प्रसिद्धानि शश्वन्ता पुनः पुनर्भवानि शरीराणि । बह्वृचारण्यके शरीराणी३ इत्युक्तम् । विषूचीना लोकगतिना । वियन्ता

विशिष्टात्मज्ञानेन छेत्ता । यम उपरमे । एष जीवन्मुक्तः । किं सर्वे जीवन्मुक्ताः लिङ्गैर्ज्ञायन्ते । न इत्याह—अन्यं कंचन जीवन्मुक्तं जना लिङ्गैर्निचिक्युः अजानन् । अन्यं न निचिक्युः न अजानन् ।

क्वचिद्दुष्टः क्वचित्तुष्टः क्वचित् पापः क्वचिच्छुचिः ।
जीवन्मुक्तो भ्रमत्येवं नैव कुत्रापि सज्जते ॥
दुर्विज्ञेया गतिस्तेषां योगसंत्यक्तकिल्बिषाः ।
जीवन्मुक्ता विरूपेण पर्यटन्ति महीतले ॥

कल्पस्तु—

धर्मी क्वचिद्धर्मविपर्ययी वा विद्यावशात्तत्र न लिप्यतेऽसौ ।
छेत्तात्मबुद्ध्याखिलदेहबन्धं स जीवमुक्तः क्वचिदेव दृश्यते ॥

इति ॥

**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥**

पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ । तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति । तदत्रोच्यते । **ऋचः अक्षरे** । अत्र ऋक्शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाः चत्वारो वेदा उच्यन्ते । ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते —द्वे विद्ये वेदितव्ये—इति प्रतिज्ञाय—तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः— इत्यादिना । तस्याः संबन्धिनि अक्षरे अदृश्यादिगुणके क्षरणरहिते अनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि । अक्षरशब्दस्य ब्रह्मवाचकत्वम्—एतद्वै तदक्षरस्य प्रशासने गार्गि—यया तदक्षरमधिगम्यते—

येनाक्षरं पुरुषं वेद सत्यम् ।

इत्यादिश्रुतिषु प्रसिद्धम् । ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः । सर्वैर्वेदैः खलु ब्रह्माधिगम्यते । तं त्वौपनिषदं पुरुषं पृच्छामि—इत्यादिश्रुतेः । ननु उपनिषद्भागानां तथास्तु । इतरेषां तु कथं ब्रह्मविषयत्वं इति । उच्यते । यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिः श्रुत्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषया भविष्यति । वेदानुवचनेन ब्रह्मणा विविदिषन्ति—इत्यादिश्रुतेः । तदेव विशेष्यते—**परमे**

उत्कृष्टे निरतिशये । **व्योमन्** व्योमनि व्योमसदृशे । अलेपत्वनीरूपत्वव्यापित्वादि-सादृश्येन व्योमेत्युक्तम् । यद्वा विशेषेण सर्वस्य रक्षके । निरधिष्ठा न कस्यचि-दस्ति स्वाध्यः । तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात् । तादृशे तत्त्वे सर्वमध्यस्तं इत्यर्थः । पुनस्तदेव विशेष्यते—**यस्मिन्** परमात्मनि **विश्वे** सर्वे **देवाः अधि निषेदुः** निषीदन्ति आश्रित्य तिष्ठन्ति तस्मिन् । यद्वा उक्तलक्षणे वस्तुनि ऋगुपलक्षिताः सर्वे साङ्गा वेदाः पर्यवसिताः इत्यर्थः । **यः** यो मर्त्यः **तत्** तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदैः प्रतिपाद्यं तात्पर्यं यद्वस्तु **न वेद** न जानाति स मर्त्यः **ऋचा** पूर्वोक्तेन ऋगादिशब्दजालेन **किं करिष्यति** । वेदनसाधनेन वेदेन वेद्यमविदित्वा किं साधयति इत्यर्थः । प्रयोजनाभावात् सर्वस्यापि वेदस्य नैष्फल्यादिति भावः । अथवा यः अक्षरमविदित्वा कर्मणां कर्ता भवति यागादी-ननुतिष्ठति तेन किंचिदपि कर्म कृतं न भवति इत्यर्थः । **ये इत्** ये एव **तत्** तत्त्वं **विदुः** जानन्ति **ते इमे सं आसते** ते एव इमे ज्ञातारः समासते सम्यक् तिष्ठन्ति । अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम् । यद्वा ये विदुरित् ये जानन्त्येव नानुतिष्ठन्ति । इच्छब्दोऽवधारणे । ते इमे ते एव समासते । गवामय-नादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति । सहार्थे संशब्दः । सत्त्रादधिकानां यागानामभावात् तेषामपि फलमेतज्ज्ञानेनैव प्राप्तं भवति इत्यर्थः । कर्तॄणां बहुत्वात् बहुवचननिर्देशः ।

अन्ये तु अन्यथा वर्णयन्ति । ऋचः । ऋक् अर्चनीयमादित्यमण्डलं ऋगादिमयं वा । ऋग्भिः पूर्वाह्णे दिवि देव ईयते—आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचः—इत्यादिश्रुतेः । तस्य संबन्धिनि अक्षरे परमे व्योमन् इति उक्तलक्षणे ब्रह्मणि—**य** एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते—इत्यादिश्रुत्युक्त-स्वरूपे । यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः वर्तन्ते । यः एतन्न वेद सः केवलया ऋचा किं करिष्यति । ये जानन्ति भावयन्ति ते एव विद्वांसः समासते भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तः चिरकालं जीवन्ति ।

अपरे प्रकारान्तरेण प्रतिपादयन्ति । ऋचः अक्षरे ऋगुपलक्षितसर्ववेदसं-बन्धिनि अक्षरे प्रणवरूपे ओंकारे अविनाशिनि सर्ववेदेषु व्याप्ते वा । प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते— तान् वेदान् अभ्यतपत् । तेभ्योऽभितप्तेभ्यः त्रयो वर्णा

अजायन्त अकारः उकारः मकारः इति। तानेकधा समभरत्। तदेतदों इति—इति। परमे निरतिशये। न हि प्रणवादधिकं किंचिन्मन्त्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात्। यच्चान्यत् त्रिकालातीतं तदप्योंकार एव—ओमिति ब्रह्म—इत्यादिश्रुतेः। वेदानां प्रणवस्य स्थानप्रतिनिधिभावः संबन्धः—यो ऋचोऽधीते—इत्याद्युपक्रम्य—यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यते। एतद्वै यजुः। त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरम्—इत्यादिश्रुतेः। यस्मिन् विश्वे सर्वे देवा अधि निषेदुः। प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवानां निवासात् सर्वदेवनिवासत्वम्। ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासात्। शिष्टमविशिष्टम्। अयं मन्त्रो निरुक्ते व्याख्यातः।

अपरे त्वपरथा वर्णयन्ति। ऋचः। ऋक् अर्चनीयो जीवः। तस्य संबन्धिनि अक्षरे अविनाशे व्याप्ते वा। परमात्मनि इत्यर्थः। अत एव जीवापेक्षया परमे उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके व्योमसदृशे वा। यस्मिन् परमात्मनि देवा गमनवन्तो व्यवहरन्तो वा इन्द्रियसंज्ञका विश्वे सर्वे अपि अधिनिषेदुः निषीदन्ति आश्रित्य वर्तन्ते। यस्तन्न वेद न जानाति उपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति सः स्थूलो जनः किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति। जननमरणादिक्लेशस्य अत्यागात् इति भावः। ये तत्तत्त्वं विदुः ते इत्यादि सिद्धम्॥

३९. विऽओमन्-निऽसेदुः—इति पदपाठः।

वियन्ता विशिष्टात्मज्ञानेन छेत्ता इत्युक्तम्। किं तद्विशिष्टमात्मज्ञानम्। तत्रोत्तरम्। ऋचः अजहल्लक्षणया अत्र ऋग्वेदादयो वेदाः। अक्षरे। अश्नुते व्याप्नोति विषयान् इत्यक्षरम्। तस्मिन्नक्षरे जीवात्मनि। परैर्मीयते इति परमम्। तस्मिन् तत्पदार्थे। व्योमन् व्यापके। वाक्यार्थे ब्रह्मात्मैक्ये। वाक्यार्थे व्यापके। असिपदार्थे इत्येके। एवं त्रिधैव वेदं इति। कर्मकाण्डविषया वेदाः त्वंपदार्थविषयाः। सगुणेशविषया वेदाः तत्पदार्थविषयाः। वेदान्तास्तु ब्रह्मात्मैक्यपराः। एवं सर्वेऽपि वेदाः ब्रह्मात्मैक्यविषया इति ज्ञात्वा ब्रह्मात्मैक्यावधारणं विशिष्टात्मज्ञानम्। यस्मिन् त्रिधा स्थिते आत्मनि वेदाः इन्द्रियदेवाः। ईशज्ञप्त्या आधिकारिका अन्तरिक्षादिस्थानगा देवाश्च

वैराजाश्विन्मया देवाश्च । अधि उपरि । उपरि विशिष्टाः सर्वेऽपि निषण्णाः अन्तर्भूताः इति काण्डत्रयविषया वेदाः ब्रह्मविषया एव । यस्तु पुरुषः तत् ब्रह्म न वेद स ऋचा ऋगादिवेदैः किं करिष्यति । केनोपायेन आत्मानं संसारादुद्धरिष्यति । ये तु तद्ब्रह्म विदन्ति ते इमे दृष्यमाना जीवन्त एव समासते सम्यगासते । समासनं मुक्तिः । कल्पस्तु—

वेदास्तु जीवे परमे तदैक्ये तात्पर्यवन्तस्त्रिविधाः सुराश्च ।
पुमांस्तु तद्ब्रह्म न वेत्ति येन कि तस्य वेदैः स्वधिया वियुक्तैः ॥

इति ॥

अग्निहोत्रार्था धेनुः यदि कुत्सितं शब्दं कुर्यात् तदानीम्—सूयवसात्—इत्यनया यवसादिकं प्रयच्छेत् । तथा च सूत्रितम्—वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूयाः—इति । प्रवर्ग्ये अभिष्टवे एषैव परिधानीया । सूत्रितं च—सूयवसात् भगवती भूयाः इति परिदध्यात्—इति ।

**सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।**
**अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥**

हे **अघ्न्ये** । गोनामैतत् । अहननीये हे गौः त्वं **सूयवसात्** शोभनयवसस्य तृणादिकस्य अत्त्री **भगवती** । भग इति धननाम । सर्वैर्भजनीयप्रभूतक्षीरादिधनवती **भूयाः** भव । **हि** । हिः पूरणः प्रसिद्धौ वा । लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा । **अथो** अनन्तरमेव **वयं** यजमानाः अपि **भगवन्तः** प्रभूतेन धनेन तद्वन्तः **स्याम** । अथैकवारं पूर्वमुक्तं इदानीं सर्वदा कर्तव्यं इति प्रार्थयते । **विश्वदानीं** विश्वकालं सर्वदा **तृणं अद्धि** भक्षय । **आचरन्ती** सर्वतो निर्गच्छन्ती **शुद्धं** निर्मलं **उदकं पिब** । अयं च मन्त्रो यास्केन व्याख्यातः—

सूयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती—इति ॥

४०. सुयवसऽअत्-भगऽवती-अथो इति-भगऽवन्तः-विश्वऽदानीम्-आऽचरन्ती—इति पदपाठः ।

ब्रह्मविद्यानुभवपर्यन्तं इतरकाण्डानुष्ठानमावश्यकं इत्याह । बुद्धिस्वरूपिणीं धेनुं पुरस्कृत्य उच्यते । भो बुद्धे अतिक्लेशात्मकतुच्छफलत्वेन अत्युग्रत्वाच्च कर्म त्याज्यं यथा पातित्यं न भवति तथा । कर्म त्यक्तुं न शक्नोषि चेत् सत्कर्मविषयिणी भूयाः । साधु यवसं सत्कर्म अभिविषयीकरोति इति सूयवसत् । ततो भगवत्येव भविष्यसि । ईश्वरार्पितं कर्म स्यादित्यर्थः । अथो अनन्तरं वयमपि भगवन्तः स्याम शुद्धान्तःकरणाः स्याम । तृणं तृणपर्यन्तं जगत् ईश्वररूपत्वेन अद्धि विषयीकुरु । भो अघ्न्ये भो अघहन्त्रि अहन्तव्ये । विश्वदानीम् । पशुभ्यो रात्रौ दीयमाना सांसारिप्रकृतिका दानी भवति । तत्स्थानीयां विश्वखण्डनीयाम् । आचरन्ती लक्षयन्ती शुद्धं निरवद्यं उद्गतानन्दं ब्रह्मरसं पिब आस्वादयस्व । यद्यपि अनया ऋचा वाश्यमानायै होमधेनवे यवसं दीयते तथापि अध्यात्मव्याख्यायां न सा रीतिरादर्तव्या इत्यवोचामः । तद्विनियोगदशायामेव तथाविधस्य उपयुक्तत्वात् । उदकमिति सुखनाम इति शाकपूणिः । यद्वा कं सुखं अकं दुःखम् । उद्गतं अकं यस्मात् तदुदकं सुखरूपं ब्रह्म । तर्हि पूर्वपदप्रकृतिस्वरः स्यात् । पाशादिपाठादन्तोदात्तत्वम् । छान्दसव्यत्ययश्च । यद्वा कात् दुःखात् उद्गतं उदकं इति तत्पुरुषत्वादन्तोदात्तः । कल्पस्तु—

> कार्या क्रिया चेद्विहितैव कार्या सैषार्पिता चेत् सकलात्मके धीः ।
> मायाविनाशस्तत आत्मसौख्यप्राकट्यमेवं सति कामधेनुः ॥

इति ॥

**गौरीर्मिमाय सलिलानि तक्षत्येकंपदी द्विपदी सा चतुंष्पदी ।**
**अष्टापंदी नवंपदी बभूवुषीं सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥**

**गौरीः** गरणशीला माध्यमिका वाक् । सुलोपाभावः छान्दसः । **मिमाय** शब्दयति । किं कुर्वती । **सलिलानिं** वृष्ट्युदकानि **तक्षंती** सम्यक् संपादयित्री । **एकंपदी** एकपादोपेता एकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुना एकपदी वा । **द्विपदी** मेघान्तरिक्षाख्यद्वयधिष्ठाना । आदित्यो वा द्वितीयः । तथा **सा चतुंष्पदी** पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना । अथ **अष्टापंदी** विदिगपेक्षया अष्टपादोपेता अष्टाधिष्ठाना । **नवंपदी** उपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना । **बभूवुषीं** एवंभूता । भवेः छान्दसः क्वसुः । ततो ङीपि वसोः संप्रसारणम् । किमनया परिगणनया । **सहस्राक्षरा** । अपरिमितवचनोऽयम् । अपरिमितव्याप्ति-

युक्ता। बहुव्यापनशीलोदकवती इत्यर्थः। कुत्रेति तदुच्यते। **परमे व्योमन्** उदकाश्रयत्वेन उत्कृष्टे अन्तरिक्षे।

केचिदेवमाहुः—गौरीः गरणशीला शब्दब्रह्मात्मिका वाक् मिमाय माति। प्रसिद्धार्थे धातुः। सलिलप्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन एकप्रतिष्ठाना एकरूपा वा प्रणवात्मना द्विपदी सुप्तिङ्भेदेन पादद्वयवती। चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन। अष्टापदी आमन्त्रितसहिताष्टविभक्तिभेदेन अष्टपदी। नवपदी बभूवुषी साव्ययैरुक्तैरष्टभिर्नवपदी। अथवा सनाभिकेषु उरःकण्ठादिषु नवसु पदेषु भवन्ती। पश्चाद्बहुविधाभिव्यक्तिमुपेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरा अनेकाकारेण व्याप्ता अनेकध्वनि प्रकारा भवति इत्यर्थः। अयं मन्त्रः आचार्येण एवं व्याख्यातः—गौरीर्मिमाय सलिलानि तक्षती कुर्वती एकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने—इति।

४१. एकऽपदी द्विऽपदी-चतुःऽपदी-अष्टाऽपदी नवऽपदी-
सहस्रऽअक्षरा-विऽओमन्—इति पदपाठः।

ननु अनेकेषां ब्रह्मवादिनां अनेकधा प्रतिपादितप्रकाराः सन्ति। तत्र कीदृशः प्रामाणिकः प्रकारः कीदृशो न इत्युच्यते। अद्वैतपर्यवसायी सः सर्वोऽपि प्रामाणिक एव इत्यभिप्रेत्याह—गौरीः। गौरं शुद्धं ब्रह्म। तत्परा श्रुतिः गौरीः। मत्वर्थे ईप्रत्ययः। मिमाय प्रतिपादयति। सलिलानि। बहुनामैतत्। बहूनि वस्तूनि। यद्वा सलिलानि स्वयं प्रतिपादितान्यपि सन्ति लीलानि सम्यग्ज्ञाननिवर्त्यानि। यद्वा सः तत्पदार्थः। लिः त्वंपदार्थः। लं असिपदार्थः। तानि उदकादीनि तत्त्वानि। तत् कुर्वती एकं तत्त्वं प्रमिनयन्ती एकस्मिन् तत्त्वे विलापयन्ती सती एकपदी भवति। पद्यते ज्ञायते इति पादो विषयः। बहुव्रीहौ सुब्लोपे—पादोऽन्यतरस्याम्—इति ङीपि पदादेशः। एकः पादो विषयः प्रतिपाद्यो यस्याः। एकमेव ब्रह्म प्रतिपादयन्ती इत्यर्थः। तत्त्वंपदार्थविषयत्वेन द्विपदी इत्यपरे। द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ—इति उत्तरपदाद्युदात्तत्वम्। इहारभ्य वक्ष्यमाणाः पक्षाः पूर्वपूर्वपक्षाशक्तविषयाः। एकपदी द्विपदी त्रिपदीत्यन्ये। तत्त्वमसिपदार्थविषयत्वात्। सा गौरीः चतुष्पदी इत्यपरे। विश्वतैजसप्राज्ञतुरीयेश्वरविषयत्वात्।

द्विपदी चतुष्पदी षट्पदीत्यन्ये। धातुषट्कसमीक्षणात्। एकपदी द्विपती चतुष्पदी सप्तपदीति केचित्। धातुपञ्चकजीवेश्वरविषयत्वात्। अष्टापदी अष्टमूर्तिविषयत्वात्। नवपदी अष्टमूर्तिनिर्गुणविषयत्वात्। एवमनेकधा बभूवुषी भवति गौरीः। अनेन क्रमेण सहस्राक्षरा सहस्रस्यार्थानां प्रतिपादकान्यक्षराणि पदानि यस्याः सा तथोक्ता। एवं-भूता श्रुतिः परमे आत्मनि व्योमन् व्यापके विशेषेणाविद्याया ओतरि अपनेतरि विशेषेण रक्षके वा ब्रह्मणि एकस्मिन्नेव तात्पर्यवती कर्तव्या। तदुक्तं प्रशंसायाम्—

ज्ञातुरज्ञानबाहुल्यात् संप्रदायवशेन वै।
बहूनां कल्पनादेव वेदवाक्यानुसारतः॥
गुर्वी चेत् कल्पना लघ्व्या साधनं यदि जायते।
तत् क्रमेणैकपर्यन्तं ततो मुक्तिरदूरतः॥
अनेकप्रतिभानं चेद्ब्रह्मण्येवागतं भवेत्।
यर्हि वै यस्य सिद्ध्यर्थं यथेष्टं कल्पना तदा॥

इति। कल्पस्तु—

भूयांसि वस्तूनि जगाद वेदः साक्षात स एकार्थपरो बुधानाम्।
द्व्यादिः सहस्रान्तमनूद्य चार्थं तात्पर्यमेकत्र दधाति मुक्तौ॥

इति॥

**तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।**
**ततः क्षरत्यक्षरं तद्विश्वमुप जीवति॥ ४२॥**

**तस्याः** उक्ताया गोः सकाशात् **समुद्राः** वृष्ट्युदकसमुन्दनाधिकरणभूताः मेघाः। **अधि** अधिकं प्रभूतमुदकं **वि क्षरन्ति** विविधं क्षरन्ति। **तेन** उदकेन **प्रदिशः चतस्रः**। तत्स्थेषु ताच्छब्द्यम्। तत्स्थाः पुरुषाः **जीवन्ति**। **ततः** पश्चात् तत् **अक्षरं** उदकं **क्षरति**। सस्यादिकमुत्पादयति इत्यर्थः। **तत्** सस्यादिकं **विश्वं** जगत् **उप जीवति**। अयमपि यास्केन व्याख्यातः—तस्याः समुद्रा अधिवि-क्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति—इति॥

४२. प्रऽदिशः इति पदपाठः।

ननु सर्वासां श्रुतीनां ब्रह्मपरत्वे पुण्यविषयश्रुत्यभावेन पुण्यपापाभावः स्यात्। पुण्यपापाभावे तन्मूलसंस्कारवन्मोक्षाभावः स्यात्। तत्रेदमुत्तरम्। तस्याः ब्रह्मविषयायाः गौर्याः सबन्धिन्याः समुद्रा अवान्तरवाचः। वाक्यैकवाक्यतापक्षे एव श्रौतः। न तु पदैकवाक्यतापक्षे इति सूचितम्। तस्याः समुद्रा इति वाचः समुद्राः—इत्यनुक्रमणिका। समुद्रा इति वाच इत्यर्थः। तस्या अक्षरं इत्यापः। सा प्रस्तारपङ्क्ति.। तस्या· समुद्राः इति ऋगेव। समुद्द्रवन्ति अर्थान् इति च समुद्राः। समुद्द्रवन्त्याप एभ्य इति वाचः। तथा मुदं आनन्दं राति ददाति इति मुद्रा ब्रह्मविद्या इति च। तत्सहिताः तदेकवाक्यतां गताः अवान्तरवाचः समुद्राः। ब्रह्मविद्यायां महातात्पर्यवती गौरीः। आह चोपवर्ष.—

बोध्यान्तरात्यये वाचां महातात्पर्यमुच्यते।
अन्यार्थमुच्यतेऽन्यच्चेत् तदवान्तरशब्दितम्॥

इति। न चान्यपराणामर्थो न ग्राह्यः प्रमाणान्तरविरोधिप्रतीतार्थपरित्यागे कारणाभावात् स्वार्थपर्यवसितानामेव वाक्यानाम्—

सर्वे वेदा यत्पदमामनन्ति।

इत्यादिश्रुतिस्मृत्यादिभिर्महातात्पर्यं ब्रह्मणि बोध्यते। ता वाचः अधि अधिकं धर्माधर्मात्मकं वस्तु विविधया विधिप्रतिषेधात्मकरीत्या क्षरन्ति उपलक्षयन्ति बोधयन्ति। यथा हि वत्सपायने तात्पर्यवन्त्योऽपि धेनवः प्रसङ्गात् स्वामिभ्योऽपि क्षीरं समर्पयति तथेत्यर्थः। तेन श्रुत्युपक्षिप्तधर्मादिना जीवन्ति जीवीभूय प्रयतन्ते। जीवा इव आचरन्ति। परमार्थतो मिथ्यात्वात्। आचारे क्विप्। प्रदिशः प्रदेशितस्य विधिप्रतिषेधात्मकरीत्या शास्त्रस्य योग्याः। चतस्रः ब्राह्मणाद्याश्चतस्रो जातयः। जातिमतामिह लक्षणा। ततः ब्राह्मणाद्याचरितधर्मादेः क्षरति वर्षासु पतति अक्षरमुदकम्। तद्विश्वं स्थावरजङ्गमात्मकं जगत् उप उपेत्य स्वीकृत्य जीवति निर्वहति। अतो जगद्धात्री भवतीत्यर्थः। कल्पस्तु—

या ब्रह्मसूत्या उपवाच एता धर्मादिमाहुस्तत एव लोकः।
धर्मादिना तेन पयःप्रपातं तद्विश्वमादाय वहत्यजस्रम्॥
अतः सर्वश्रुतीनां स्यान्महातात्पर्यमात्मनि।
मानान्तराविरोधे तु प्रतीतोऽर्थो न चोद्यते॥

इति॥

**शकमयं धूममारादपश्यं विषूवता पर एनावरेण।**
**उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन्॥ ४३॥**

**शकमयं** शकृन्मयं शुष्कगोमयसंभूतं **धूमं** **आरात्** नातिदूरे **अपश्यं** दृष्टवानस्मि। दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनविषयतया उक्तः। **विषुवता** व्याप्तिमता **एना** अनेन **अवरेण** निकृष्टेन धूमेन **परः** परस्तात् तत्कारणभूतमग्निं अपश्यम्। अहं यजमानः इत्यर्थः। किंच **उक्षाणं** फलस्य सेक्तारं **पृश्निं** शुक्लवर्णम्। प्राश्नुते तेन फलं इति स्वयं प्राश्नुते इति वा पृश्निर्वल्लीरूपः सोमः। तं **वीराः** विविधेरणकुशलाः ऋत्विजः **अपचन्त**। अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः। स च क्रियासामान्यवचनः। अत्र औचित्यादभिषवेण संपादितवन्त इत्यर्थः। **तानि** तत्साधनानि **धर्माणि** अनुष्ठानानि **प्रथमानि** प्रथमानि प्रकृष्टानि फलपर्यवसायीनि **आसन्** संपादितान्यासन्। यद्वा—

सोम उक्षाभवत् पूर्वं तं देवाः शकृतापचन्।
यज्ञार्थे तद्भवो धूमो मेघ आसीत्तदुच्यते।
तत्परत्वेन वा मन्त्रो व्याख्येयोऽयं विचक्षणैः॥

४३. शकऽमयम्-विषुऽवता-इति पदपाठः।

ननु महावाक्ये स्थितानां का गतिः। का च अवान्तरवाक्येषु स्थितानाम्। महावाक्यप्राप्तौ च किं साधारणं कारणम्। एतेषां त्रयाणां प्रश्नानां क्रमेण उत्तरमाह। यागसमाप्तावपि अदग्धहविर्जनितो धूमः शकधूमः। तदुपस्थानमनेन—इति भारद्वाजसूत्रम्। उक्तं च—शकमयमिति शकधूमः इति। अत्रैव मन्त्रे उक्षाणं पृश्निम्—इति उक्षपदेन सोम उच्यते इत्यनुक्रमणिका। ज्ञानकाण्डे पुनः शकमयं धूमं इत्यस्य अन्य एवार्थः। अधियागाविनियोगविषयमन्त्रत्वे सति उपनिषत्सु सत्त्वात्। अत एव प्रयोगसमवेतार्थप्रकाशकत्वं नास्ति। प्रयोगाभावान्मन्त्रत्वेऽपि जपपारायणादिविनियुक्तानामदृष्टार्थानामर्थः प्रकाश्यते। अध्यात्मपरवाक्याभ्यासेन फलाधिक्यम्। तदाह वृद्धमनुः—

अध्यात्मवाक्यजपनादुक्तं कोटिगुणं भवेत्।
तदर्थमनुसंधत्ते जपंश्चेदीश एव सः॥

इति। शकमयं नानाशक्तिमयं धूमं धूमसदृशं आवरकाज्ञानं ऐश्वरम्। आरात् दूरतो गतं तद्विषये कुण्ठितशक्तिकम्। विषूवता सर्वत्र प्रसृतेन ब्रह्मणा एना प्रत्यक्षादिप्रमाणसिद्धेन अनेन अवरेण जीवराशिना सह स्थितं धूमम्। महावाक्यार्थधिया परो विगलिताविद्यः अहमपश्यं पश्यामि। अत्रेयं वेदान्तसंप्रदायस्थितिः। ईशमाया एका नित्या अनादि-

व्यापिका च। तच्छाया जीवमूलाख्या माया अनादय: अनन्ताश्च। ज्ञाननाश्यत्वात् ज्ञाने सति ज्ञानिनं प्रति ईशमाया कुण्ठितशक्तिर्भवति न नश्यति। सर्वमुक्तिप्रसङ्गात्। सूर्यसमीपस्थरात्र्यभाववत् रज्जुसमीपस्थसर्पाभाववच्च मुक्तं प्रति सर्वमायानामभाव:। तदुक्त वसिष्ठेन वेदान्तकारिकायाम्—

एका मायेशितु: स्याद्विनशनरहितानादिका व्यापिका स्या-
जीवाविद्या अनन्ता प्रथमविरहिता ब्रह्मविद्याविनाश्या:।
ज्ञानी सर्वा च मायां परिहरति तथा सूर्यपार्श्वस्थरात्री
रज्ज्वा: पार्श्वस्थसर्पं शमयति महतीत्यन्यथा सर्वमुक्ति: ॥

इति। अथ अवान्तरस्थितान् प्रति आह—उक्षाणं गोपयसा उक्षमाणं सिच्यमानं ज्ञीप्साविषयं सगुणरूपं कर्म च। उक्ष सेचने। अजहल्लक्षणया अत्र पशु-पुरोडाशादेरपि ग्रह:। पृश्निम्। स्वर्गनामैतत्। साधने साध्योपचार:। यथा—गोभि: श्रीणीत मत्सरम्। नड्वलोदकं पादरोग:—इति। पृश्नि स्वर्गादिहेतुं काम्यसोमादिकं अपचन्त। धातूनामनेकार्थत्वात् संस्कुर्वन्ति। वीरा वैदिका:। ऋग्वेदादिं विशेषेण वेदमीरयन्ति पठन्ति। अमहावाक्यप्राप्तौ साधारणकारणान्याह—तानीति अत्यन्तोत्कृष्टानि यच्छब्दाभावात् नित्यनैमित्तिकरूपाणि धर्माणि पूर्वोक्तानि सोमादीनि धर्मसाधनानि ज्ञानस्य पूर्वसाधनानि साधारणानि च आसन् भवन्ति।

जीवै: समेतां बहुरूपमायामैशीमपश्यं स्वधिया निवृत्ताम्।
अन्यश्रुतिस्था कृतिभि: सुराभा निष्कामकर्मात्मधियो हि हेतु: ॥

इति ॥

**त्रय॑: के॒शिन॑ ऋतु॒था वि च॑क्षते संवत्स॒रे व॑पत॒ एक॑ एषाम्।**
**विश्व॒मेको॑ अ॒भि च॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम् ॥ ४४ ॥**

**के॒शिन॑:** केशस्थानीयप्रकृष्टरश्मियुक्ता: **त्रय॑:** अग्न्यादित्यवायव:। ते च **ऋ॒तु॒था** काले काले **वि च॒क्ष॒ते** विविधलक्षणां भूमिं पश्यन्ति। तेषां पृथक्पृथक् कार्यमाह—**ए॒षां** मध्ये **एक॑:** अग्नि: **सं॒व॒त्स॒रे** अतीते सति यद्वा प्रतिसंवत्सरं **व॒प॒ते** दाहेन केशस्थानीयौषधिवनस्पत्यादिच्छेदनं नापितकार्यं करोति। **एक॑:** अन्य आदित्य: **विश्वं॑** सर्वं जगत् **शची॑भि:** स्वकीयै: प्रकाशवृष्ट्यादिकर्मभि: **अ॒भि च॒ष्टे** सर्वत: पश्यति। **एक॑स्य** वायो: **ध्राजि॑:** गति: **द॒दृ॒शे** दृश्यते सर्वै:। **न रू॒पम्**।

अप्रत्यक्षत्वात् स्पर्शशब्दकम्पलिङ्गैः गम्यते इति हि न्यायविदो वदन्ति । अयमपि मन्त्रो यास्केनैवं व्याख्यातः—त्रयः केशिन ऋतुथा विचक्षते काले काले अभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य—इति ॥

४४. ऋतुऽथा इति पदपाठः ।

लाक्षणिका क्रिया फलं कथं सूते । अचेतना च कथं फलदा । इत्याशङ्क्य तुष्टेशावयवा देवता एव तत्कर्मवशात् फलदा इति वक्तुं अनन्ता अपि देवाः त्रिष्वेव देवेषु अन्तर्भूताः इत्यभिप्रेत्य आह—त्रयो देवाः अग्निर्वायुः सूर्यश्च केशिनः दीप्तयः । तत्तस्थानस्था देवता एव वा केशाः । तद्वन्तः भूम्यन्तरिक्षस्वर्गस्थाः । पार्थिवाः सर्वे अग्नौ अन्तर्भवन्ति इति अग्निरुच्यते । एवमन्तरिक्षस्था देवा वायौ । एवं स्वर्गस्था देवाः सूर्ये । एवमग्निवायुसूर्याः । ऋतुथा । था हेतौ च छन्दसि—इति हेतौ सप्तम्यन्तात् था छन्दसि । हेतुश्च निमित्तं प्रयोजनं वा । काले कालनिमित्तम् । ऋतुरिति यदा नाम चिकेर्षा ऋतौ ऋतौ क्रियमाणत्वाद्वा ऋतवो यज्ञाः । ऋतुथा यज्ञनिमित्तम् । विचक्षते दीप्यन्ते स्वकार्यं कुर्वन्ति । संवत्सरे । अग्निर्ऋतुः संवत्सरः—इत्युक्तं संवत्सरमध्ये । ऋतुद्वयं ऋतुद्वयम्—इति च विश्लिष्टोक्तिः । एषां त्रयाणां मध्ये एकः अग्निः वपते वसन्तग्रीष्मयोः दहति उपरिपतितं तृणादिकम् । तृणदाहदग्धा भूमिः अधिकमौषधादिकं जनयति ।

श्मश्रु वपसि प्रभूम ।

तथा—

अप्स्वग्ने सधिष्टव ।

विश्वं जलात्मकं एकः सूर्यः अभि अभ्यात्मं अन्तरस्थं प्रकाशयते । अध्यात्मपरवाक्याभ्यासेन फलाधिक्यम् । यदाह वृद्धमनुः—

अध्यात्मवाक्यजपनादुक्तं कोटिगुणं भवेत् ।
तदर्थमनुसंधत्ते जपंश्चेदीश एव सः ॥

इति । अथ महावाक्यस्याकर्षणेन चष्टे दर्शयति हेमन्तशिशिरयोः । तदानीमेव औषध्यादिदर्शनपरिपाकादौ ऊष्माधिक्यापाताच्च । शचीभिः स्वव्यापारैः स्वप्रज्ञाभिर्वा ।

देवत्रयान्वितं एतत् पदम्। प्रावृट्शरदोस्तु ध्राजिः शब्द एव एकस्य वायोर्दृश्यते। नैव रूपमस्य दृश्यते। तथा—

आत्मा देवानां भुवनस्य गर्भः।

इति मन्त्रप्रापिकार्था वा उपलक्षणार्था इयमृक्। कल्पस्तु—

भूखस्वरीशा अनलानिलेनाः स्वकर्मभिश्चित्रितलोकयात्राः।
त्रिष्वेव देवाः सकलाश्च सन्ति दद्युः फलं कर्मणि नाशिनस्ते॥

इति॥

**चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ ४५॥**

**वाक्** वाचः कृत्स्नायाः **पदानि चत्वारि परिमिता** परिमितानि। लोके या वागस्ति सा चतुर्विधा विभक्ता इत्यर्थः। **तानि** पदानि **ब्राह्मणाः** वेदविदः **ये मनीषिणः** मनस ईषिणः मेधाविनः **विदुः** जानन्ति। तेषां मध्ये **त्रीणि गुहा** गुहायां **निहिता** स्थापितानि **न इङ्गयन्ति** न चेष्टन्ते। न प्रकाशन्ते इत्यर्थः। **वाचः तुरीयं** पदं **मनुष्याः** अज्ञास्तज्ज्ञाश्च **वदन्ति** व्यक्तमुच्चारयन्ति व्यवहरन्ति। कानि तानि चत्वारि इत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति। सर्ववैदिक वाग्जालस्य संग्रहरूपा भूरादयः तिस्रो व्याहृतयः प्रणव एकः इति वेदत्रयसारत्वात् तासां व्याहृतीनामेव सारसंग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्य इति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमिता इति केचन वेदवादिनो वदन्ति। अपरे व्याकरण-मतानुसारिणः नामाख्यातोपसर्गनिपातभेदेन। क्रियाप्रधानमाख्यातम्। द्रव्य-प्रधानं नाम। प्रागुपसृज्यते आख्यातपदस्य इति उपसर्गः प्रादिः। उच्चाव-चेष्वर्थेषु निपतनात् निपातः अपितुचेत्यादिः। एतेष्वेव सर्वा वाक् परिमिता इत्यखण्डायाः कृत्स्नायाः वाचः चतुर्धा व्याकृतत्वात्। वाग्वै पराच्यव्याकृतावदत्। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते—इति श्रुतेः। अन्ये तु याज्ञिका मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकी इति। याज्ञिकैः समाख्यातः अनुष्ठेयार्थप्रकाशको वेदभागः मन्त्राः। मन्त्रविधानप्रतिपादको वेदभागः—इति मन्त्राः। कल्पोऽत ऊर्ध्वम्—इत्यादिना उक्तः कल्पः। मन्त्रतात्पर्यार्थ-

प्रकाशको वेदभागो ब्राह्मणम्। भोगविषया—गामानय—इत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाक् नियमिता इति याज्ञिकाः। ऋग्यजुःसामानि चतुर्थो व्यावहारिकी इति नैरुक्ताः। सर्पाणां वाक् वयसा क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकी इत्यैतिहासिकाः। पशुषु तूणवेषु मृगेषु आत्मनि च इत्यात्मवादिनः। अपरे मान्त्रिकाः प्रकारान्तरेण प्रतिपादयन्ति। परा पश्यन्ती मध्यमा वैखरी इति चत्वारि इति। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परा इत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्ती इत्युच्यते। योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमा इत्युच्यते। मध्ये हृदयाख्ये उदीयमानत्वान्मध्यमायाः। अथ यदा सैव वक्त्रस्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरी इत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा गवाख्यस्य शब्दब्रह्मणः अधिगन्तारः योगिनः परादिचत्वारि पदानि विदुः जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहानिहितानि हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्धानां आख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृति-प्रत्ययादिविभागज्ञाः वाग्योगविदः तानि पदानि जानन्ति। अवाग्योगविदः पामराः वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति अर्थप्रकाशनाय प्रयुञ्जते। अयं मन्त्रो निरुक्ते व्याख्यातः। सोऽत्राप्यनुसन्धेयः—अथापि ब्राह्मणं भवति। सा वै वाक् सृष्टा चतुर्धा व्यभवत्। एष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां सा अग्नौ सा रथन्तरे। या अन्तरिक्षे सा वायौ सा वामदेव्ये। यादिवि सा आदित्ये सा बृहति सा स्तनयित्नौ। अथ पशुषु ततो या वागत्यरिच्यत। तां ब्राह्मणेष्वदधुः। तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्—इति।

४५. परिऽमिता-निऽहिता-इति—पदपाठः।

नन्वेवं देवतासद्भावे सति उपासितप्रसन्नीकृतदैवतस्य अधीतवेदस्य श्रुतव्याकरण-मीमांसाद्वयव्युत्पन्नपदपदार्थस्य आचार्यं विनापि ब्रह्मज्ञानमुत्पत्स्यते इत्याचार्येण अलम्। तत्राह—चत्वारि वाक् वाचो वेदस्य परिमितानि गणितानि। पद्यन्ते इति पदानि

विषयाः। तानि सर्वाणि कार्त्स्न्येन विदुः विदन्ति ब्राह्मणा वेदज्ञाः। न सर्वे ब्राह्मणाः। किंतु ये मनीषिणः ये गुरुप्रसादजनितज्ञानवन्तः। गुरुरहितानां तु गुहा गुहायां महापुरुषबुद्धौ त्रीणि पदानि निहितानि निलीनानि गुप्तानि नेङ्गयन्ति नात्मानं प्रकाशयन्ति नैव वा प्रकाशन्ते। तुरीयं भागं मनुष्या गुरुरहिताः प्रतिपादयन्ति। अयं भावः। तुरीयप्राज्ञतैजसविश्वाः प्रत्येकं मनसा चतुर्भागीकरणीयाः। तानि गुरुमन्तः कार्त्स्न्येन विदन्ति। गुरुरहिताः प्राज्ञा अपि भागत्रयं न विदन्त्येव। तेषा स तत्र चतुर्भागमात्रं प्रकाशते। अतः गुरुमन्त एव वेदतात्पर्यज्ञाः। अन्यस्त्वाह। तुरीयं प्राज्ञतैजसान्यं चतुर्थं मनुष्या वदन्ति इति। अपर आह। परा पश्यन्ती मध्यमा वैखरी इति। मनुष्याः वैखरीमेव वदन्ति इति। नामाख्यातोपसर्गनिपातेषु चतुर्थं भागं वदन्ति इत्यपरे। एवं धर्मार्थकाममोक्षेषु इत्यन्ये। कल्पस्तु—

चत्वारि वाचो मिमते पदानि स्वाचार्यवन्तः खलु तानि विद्युः।
त्रीण्यत्र गुह्यानि गुरूदितानि तुर्यं हि भागं प्रवदन्ति मर्त्याः॥

इति।

**इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हु॒रथो॑ दि॒व्यः स सु॑प॒र्णो ग॒रुत्मा॑न्।**
**एकं॒ सद्विप्रा॑ बहु॒धा व॑दन्त्य॒ग्निं य॒मं मा॑त॒रिश्वा॑नमाहुः॥ ४६॥**

अमुमादित्यं ऐश्वर्यविशिष्टं **इन्द्रं आहुः**। तथा **मित्रं** प्रमीतेर्मरणात् त्रातारं अहरभिमानिनं एतन्नामकं देवं तमाहुः। **वरुणं** पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः। तथा **अग्निं** अञ्जनादिगुणविशिष्टं एतन्नामकमाहुः। **अथो** अपि च **सः** अयमेव **दिव्यः** दिवि भवः **सुपर्णः** सुपतनो **गरुत्मान्** गरणवान् पक्षवान् वा। एतन्नामको यः पक्षी अस्ति सोऽप्ययमेव। कथमेकस्य नानात्वमिति। उच्यते। अमुमेवादित्य **एकं** एव वस्तुतः **सत्** सन्तं **विप्राः** मेधाविनः देवतातत्त्वविदः **बहुधा वदन्ति** तत्तत्कार्यकरणेन इन्द्राद्यात्मानं वदन्ति। एकैव वा महानात्मा देवता। स सूर्य इत्याचक्षते—इत्युक्तत्वात्। किंच तमेव **अग्निं** वृष्ट्यादिकारणं वैद्युताग्निं **यमं** नियन्तारं **मातरिश्वानं** अन्तरिक्षे श्वसन्तं वायुं **आहुः**। सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अत्र ये केचित्—अग्निः सर्वा देवताः—इत्यादि श्रुतितः अयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा अग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्रः इति वदन्ति। तत्पक्षे प्रथमोऽग्निशब्दः उद्देश्यः। तमग्निमुद्दिश्य इन्द्राद्यात्मकत्व-

कथनम् । अयं मन्त्रो निरुक्ते एवं व्याख्यातः—इममेवाग्निं महान्तमात्मानमेक-मात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् । दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा—इति ।

४६. अथो इति॑। सु॒ऽप॒र्णः—इति पदपाठः ।

ननु—चत्वारि वाक्—इति पदार्थानां नानार्थत्वमुक्तम् । तर्हि द्वैतापत्तिः इत्याशङ्क्य आह । एकैव देवता परमात्मा सर्वदेवता । एकस्यैव नानानामग्रहणं इत्युच्यते । यद्वा—त्रयः केशिनः—इत्यत्र देवतात्रित्वमुक्तम् । तर्हि इन्द्रादयो न काश्चिद्देवता इत्याशङ्क्याह । एकैव देवता परमात्मा सर्वदेवता । एकस्यैव नानानामग्रहणम् । त्रित्वोक्तिस्तु नानादेवतानां त्रित्वसंख्यावरोधार्थं यज्ञादिप्रवृत्त्यर्थम् । तदुच्यते—इन्द्रं परेशं आहुः—

अहन्नहिं पर्वते शिश्रियाणम् ।

इत्यादौ । मित्रं परेशमाहुः—

मित्रो जनान् यातयति ब्रुवाणः ।

इत्यादौ । वरुणं परेशमाहुः—

शतं ते राजन् भिषजः ।

इत्यादौ । अग्निं परेशमाहुः—

त्वमग्ने रुद्र ।

इत्यादौ । अथो तथा दिव्यः सूर्यः । तं परेशमाहुः—

चित्रं देवानाम् ।

इत्यादौ । स परेशो गरुत्मान् सुपर्णः इत्याहुः ।

सौवर्णपक्षममितद्युतिमप्रमेयं छन्दोमयं विविधयज्ञतनुं वरेण्यम् ।
पक्षौ बृहच्च भवतो रथवच्च यस्य तं वैनतेयमजरं प्रणमामि नित्यम् ॥

इदानीं अग्निं परेशमाहुः । अग्निशब्दोऽत्र नेत्राग्निमतो रुद्रस्य वाचकः ।

स्थिरेभिरङ्गैः ।
अर्हन् बिभर्षि ।

इत्यादौ । यमं परेशमाहुः—

त्रिकद्रुकेभिः पतति ।

इत्यादौ । मातरिश्वानं परेशमाहुः—

आत्मा देवानां भुवनस्य गर्भः ।

इत्यादौ । इन्दति इति इन्द्रः । इदि परमैश्वर्ये । मितो हिंसायाः त्रायते इति मित्रः । एवं वृणुते इति वरुणः । अङ्गं नयति इत्यग्निः । अगि गतौ । णीञ् प्रापणे—इति । गत्यार्थाः ज्ञानार्थाः । दिवि महापुरुषबुद्धौ द्योतनवत्यां भवो दिव्यः । शोभनो मोक्षपक्षः सुपर्णः । संसारमोक्षाभ्यां गरुद्भ्यां गरुत्मान् । रोदयति इति रुद्रः । स एव अग्रणीत्वादग्निः । यमयति इति यमः । येन रुष्टेन मातरि मायायां क्षिप्तो जीवः श्वेव भवति स मातरिश्वा । एकं सत् ब्रह्म विप्राः ब्राह्मणत्वाद्यभिमानिनो यज्ञादिसिद्धये बहुधाभिधानेन इन्द्रादिरूपेण आहुः । योजनान्तरे तु विप्रा मेधाविनः तत्त्वविदस्तु इन्द्रादिरूपे बहुधा सद्ब्रह्म एकमाहुः । कल्पस्तु—

इन्द्रादिशब्दा गुणयोगतो वा व्युत्पत्तितो वापि परेशमाहुः ।
विप्रास्तदेकं बहुधा वदन्ति प्राज्ञास्तु नानापि सदेकमाहुः ॥

इति ।

वर्षकामेष्ट्यां तिस्रः पिण्ड्यो होतव्याः । तत्र—कृष्णं नियानम्—इति तृतीयस्यानुवाक्या । कृष्णं नियानं हरयः सुपर्णाः । नियुत्वन्तो ग्रामजितो यथा नरः—इति सूत्रितत्वात् ।

**कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।**
**त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥ ४७ ॥**

**कृष्णं** कृष्णवर्णं **नियानं** नियमेन गच्छन्तं मेघम् । **हरयः** उदकस्य हर्तारः । **सुपर्णाः** शोभनपतना रश्मयः । **अपः वसानाः** उदकानि वासयन्तो मेघेषु । अद्भिर्मेघान् पूरयन्तः इत्यर्थः । अन्तर्भावितण्यर्थात् द्विकर्मकत्वम् । यद्वा कृष्णं नियानं नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् । तत् प्रति । तस्मिन् वर्षकाले इत्यर्थः । एवं कुर्वन्तः **दिवं** द्युलोकं तदाश्रितमादित्यं वा उद्दिश्य **उत् पतन्ति** ऊर्ध्वं गच्छन्ति । **ते** रश्मयः **ऋतस्य सदनात्** उदकस्य स्थानात् आदित्य-

मण्डलात् **आ अववृत्रन्** आवर्तन्ते अर्वाञ्च आगच्छन्ति । **आत् इत्** अनन्तरमेव यदा अर्वाक् गच्छन्ति तदानीमेव **घृतेन** उदकेन **पृथिवी वि उद्यते** विविधं क्लिद्यते । कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः— इत्यादि निरुक्तं द्रष्टव्यम् ॥

४७. निऽयानम्-सुऽपर्णाः इति—पदपाठः ।

ननु दुरवगाहज्ञानमार्गात् भक्तिमार्ग एव ज्यायान् इत्याशङ्क्य पुनरावृत्तिदोषत्वेन ज्यायस्त्वं इत्यभिप्रेत्य भक्तस्वरूपादिकमाह—कृष्णं विष्णुं सगुणं ब्रह्म । नियानं नियमेन भक्तैर्यातव्यम् । हरयः सुपर्णाः सुपर्णं गरुडसमानजातिकं आरूढाः । सुपर्ण-मारोहन्ति इति । अपः । आपः इत्यन्तरिक्षनाम । अन्तरिक्षसमं सूक्ष्मवस्त्रं वसानाः परिदधानाः । दिवं स्वर्गं ते उन्मुच्य त्यक्त्वा पतन्ति पृथिवीं प्राप्नुवन्ति । विष्णवो भूत्वा सारूप्यादिना समानतां प्राप्ताः सुपर्णाः । ते विष्ण्वादिलोकं प्राप्ताः आ अववृत्रन् आवर्तन्ते । कुतः । तस्य ऋतस्य विष्ण्वादेः सगुणब्रह्मणः सदनात् लोकात् । आदित् आगमनसमकालमेव घृतेन उदकेन पृथिवी विशेषेण उद्यते आर्द्रीक्रियते । उन्दी क्लेदने । परस्माल्लोकात् भुवनमागच्छन्ति । मेघीभूय उदकीभूय वृष्टिरूपेण भुवमार्द्रयित्वा ओषधि-वनस्पत्यादिरूपं प्राप्य तद्रूपेण पुरुषं प्राप्य स्त्रियो जठराज्जायन्ते । तदुक्तं शिवधर्मोत्तरे—

> वायुमेघाम्बुभूम्यन्तरेतोगर्भत्वमाश्रिताः ।
> जायन्ते जठराज्जीवाः पतन्तः सर्वतो भुवि ॥

इति । कल्पस्तु—

> सारूप्यमुख्यां पदवीं प्रपद्य विष्ण्वादिलोकान् द्रुतमाश्रयन्ति ।
> वाय्वम्बुदे ओषधिवीर्यगर्भभावं प्रपन्नाः पुनरुद्भवन्ति ॥

इति ।

**द्वाद॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत ।**
**तस्मि॑न्त्सा॒कं त्रि॑श॒ता न श॒ङ्कवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥ ४८ ॥**

**द्वाद॑श** एतत्संख्याकाः **प्र॒धयः॑** परिधयः प्रहिता वर्तन्ते । तत्स्थानीयाः द्वादश मासाः **एकं॒** अद्वितीयं **च॒क्रं** क्रमणस्वभावं संवत्सराख्यं चक्रं आश्रिताः ।

तथा **त्रीणि** त्रिसंख्याकानि **नभ्यानि** नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यानि आश्रितानि । यथा सूर्यरथचक्रस्य द्वादश परिधयो नाभ्यर्हाणि त्रीणि फलकानि सन्ति तद्वत् कालचक्रस्यापि । **कः उ** कोऽपि महत् **तत्** चक्रं **चिकेत** जानाति । **तस्मिन्** चक्रे **साकं** सह **शङ्कवः न** शङ्कव इव । अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि संवत्सरचक्रे **त्रिशताः** एतत्संख्याकाः **षष्टिः न** । नशब्दश्चार्थे । षष्टिश्च अराः अरस्थानीयान्यहानि । **अर्पिताः** अर्पितानि । कीदृशानि तानि । **चलाचलासः** । एकश्चलशब्दो द्विर्भावप्राप्तः । चलचलाः । चलनस्वभावानि इत्यर्थः । चरिचलिपतिवदीनामच्या-क्चाभ्यासस्य—इति द्विर्वचनं आगागमश्च । ततोऽसुक् । षष्टिश्च वै त्रीणि च शतानि संवत्सरस्याहानि—इति ब्राह्मणम् । द्वादश प्रधयश्चक्रमेकमिति मासानाम् । मासा मानात्—इत्यादि निरुक्तम् ॥

४८. प्रऽधयः-ऊं इति-त्रिऽशताः—इति पदपाठः ।

जाताश्च कालेन संसारेण च व्याप्यन्ते इति वक्तुं कालसंसारस्वरूपवर्णनेन कालचक्रं वर्णयति । ननु—द्वादशारं नहि—इत्यत्र मन्त्रेऽपि एषोऽर्थः अभिहितः । सत्यम् । तस्यैव विवृत्तिरियं अधिकविवक्षया । द्वादश प्रधयः । प्रधीयन्ते इत्यराः मासात्मकाः । तैरारब्धमेकं संवत्सरात्मकं कालचक्रम् । तस्य च त्रीणि नभ्यानि तिस्रो नाभयः । ऋतुद्वन्द्वेन नाभिः । षडृतुः संवत्सरः—इति श्रुतेः । को ब्रह्मा । को वा पुरुषः तत् कालचक्रं उ चिकेत जानाति । तस्मिन् कालचक्रे साकं सहभवा अन्योन्यानुबद्धाः त्रिशताः षष्टिश्च इत्येवं संख्याताः सूक्ष्मा अराः शङ्कवः न कीलाः इव अर्पिताः । कीलका इव चक्रे निखाताः । अनेन त्रिविधं भूतपञ्चकं माससंवत्सरकर्तृरूपम् । कालचक्रे प्रवर्तकत्वात् तदात्मकमित्युक्तम् । न चलाचलासः न चलाः अव्यभिचारिणः । चरिचलिपति—इति अभ्यासान्ते दीर्घ । एवमधिभूतं सूर्यचक्रम् । अधिदैवम् । मासा एव प्रधयः । संवत्सरश्चक्रम् । ऋतवो नाभयः । षष्ट्यधिकं त्रिशतं सूक्ष्मा अरास्तु दिवसा रात्रयो वा । तत्सन्धयः पूर्वे वा परे वा । अध्यात्मं तु—प्रधीयन्ते प्रधानानि स्वीक्रियन्ते इति प्रधयो मनोबुद्धिसहितानि इन्द्रियाणि द्वादशारस्थानानि । तैरारब्धं चक्रं प्राणान्तः-करणात्मकं एकं लिङ्गशरीरं सर्वयोनिषु भेदाभावादेकांशस्य चक्रसदृशत्वात् चक्रम् । त्रय तिस्रो नाभयः अवस्थाः । त्रयः स्वप्नाः इत्युक्ताः । न चैतत् चक्रं भ्रमणादुपरमति

इति आह। क उ तत् ब्रह्म चिकेत वेत्ति क एव पुमान्। न च ब्रह्मज्ञानादृते तन्निवृत्तिः। ब्रह्मज्ञानं तु दुर्लभम्। तस्मिन् लिङ्गशरीरे आश्रितं साकं सहभावि स्थूल-शरीरम्। अत्र च स्थूलदेहे त्रीणि शतानि षष्टिश्च शङ्कव इव स्थिताः अरा अस्थिरूपाः अर्पिताः अन्तर्निहिताः आधारस्तम्भसमानाः। तेन चञ्चला न। अतिदृढाः। अन्ये तु त्रिशतं षष्टिर्मज्जानः इत्याहुः। परे अस्थिसन्धय इत्याहुः। प्राणो वंशः। अथ कौण्ठरव्यः इत्येताभ्यां अधिदैवाध्यात्मविषयाभ्यां उपासनापराभ्यां खण्डाभ्यामयमर्थ उक्तः सूचितः। अत्रापि उपासना विवक्षिता इति अस्मज्ज्येष्ठभ्रातरः लक्ष्मीधराचार्याः उक्तवन्तः। कल्पस्तु—

मासोदितारैर्हित उक्तसंख्यैश्चक्रं त्रिनाभं त्रिशतत्रयं च।
षष्टिस्तु सूक्ष्मा अरका अचाल्याश्चक्र रवेरधिभूतमिदं वदन्ति॥
अधिदैवं त्वरा मासास्तनुश्चक्रं तु वत्सराः।
त्रिनाभिरप्यराः सूक्ष्मा दिवसाः सन्धयो निशाः॥

इदमाधिदैवते। अध्यात्मं तु—

बुद्धिर्मनःखानि अरा द्विषट् च चक्रे च लिङ्गं त्रिपुरा व्यवस्थाः।
तत्र स्थितस्थूलशरीरभाजो ह्यस्थ्यादयोऽरा अणवः प्रसंख्याः॥

इति।

प्रवर्ग्ये अभिष्टवे यस्ते स्तनः इत्येका। सूत्रितं च—यस्ते स्तनः शशयो यो मयोभूः। गौरमीमेदनु वत्सं मिषन्तम्—इति। एषैव सारस्वते पशौ हविषो याज्या। सूत्रितं च—यस्ते स्तनः शशयो यो मयोभूः। त्वं सोम प्रविचिकितो मनीषा इति द्वे—इति।

**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि।**
**यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः॥ ४९॥**

हे **सरस्वति ते** तव संबन्धी **यः स्तनः** स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः। **शशयः** शयानः तव देहे वर्तमानः। **यः** च स्तनो **मयोभूः** रसास्वादिनां सुखस्य भावयिता। **येन** स्तनेन **विश्वा** सर्वाणि **वार्याणि** वरणीयानि अभिमतरूपाणि धनानि **पुष्यसि** भोक्तृभ्यः।

**यः** च स्तनः **र॒त्न॒धाः** बहुविधरमणीयरसानां धारयिता **व॒सु॒वित्** वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता वा। किं च **यः** स्तनः **सु॒दत्रः** शोभनदानः। सुदत्रः कल्याणदानः—इति निरुक्तम्। अत्र असकृत् यच्छब्दश्रवणं स्तनस्य अतिप्रशस्तत्वस्य ज्ञापनार्थम्। हे देवि **तं** तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनं **इ॒ह** अस्मिन् कर्मणि इदानीं वा **धात॑वे** अस्माभिर्धातुं पातुं पानाय **कः॒** कुरु॥

४९. म॒यः॒ऽभूः-र॒त्न॒ऽधाः-व॒सु॒ऽवित्-सु॒ऽदत्रः क॒रिति॑ कः—इति पदपाठः।

एवंविधकालचक्रसंसारचक्रनिवृत्तिः महावाक्यादेव इति वदन् सरस्वतीं पुरस्कृत्य किंचिद्विशेषमाह। त्रिविधा हि सरस्वती—पावका नः—इति तृचोक्ता। तत्र वाग्रूपिणी देवतारूपिणी नदीरूपिणी च क्रमादुक्ता। अत्र देवतारूपिणी कथ्यते। भो वाग्रूपिणि सरस्वति वेदविद्ये तव स्तनः कुचः अमृतस्रावकः। स्तनधन शब्दे। शब्दात्मकः। शशयः। शीङः अचि छान्दसं द्विर्वचनम्। शयानः अविद्यातो जीवः। तत्प्रधानवाक्यमपि लक्षणया शशय इत्युच्यते। यत्र परमात्मानुवादेन प्रत्यगात्मैवोच्यते तद्वाक्यं सरस्वत्याः स्तनस्थानीयम्। तं स्तनं धातवे। डुधाञ् धारणपोषणयोः। अस्मत्पोषणाय। कः कुरु सम्पादय। इह जीवात्मनि देशे काले च। तथा यश्च द्वितीयः स्तनः मयोभूः सुखरूपः परमात्मा तत्प्रधानं वाक्यमपि लक्षणया मयोभूः। यत्र परमात्मानुवादेन परमात्मा उच्यते तद्वाक्यं देवरूपं सरस्वत्याः द्वितीयस्तनस्थानीयम्। तं स्तनं धातवे अस्मत्पोषणाय संपादय। अथ नदीरूपिणी सरस्वती। भो नदीरूपिणि सरस्वति ते तव संबन्धिना स्तनेन अमृतस्रावकेन येन विश्वानि सर्वाणि वार्याणि वारिभवानि व्रीह्यादिधान्यादीनि पोषयसि स प्रवाहो बहिर्निपातितः क्षेत्राणि। प्राणिधान्याद्युत्पत्तिहेतुः स प्रवाहो नदीरूपः सरस्वत्या स्तनस्थानीयः। तं स्तनं धातवे धातुं ममात्मानं पालयितुं कुरु संपादय। धाञः तुमर्थे तवेप्रत्ययः। एवं सरस्त्युदकसाध्यसस्यादिसमृद्धिर्याचिता। तथा यश्च द्वितीयः स्तनः रत्नधाः रत्नानामुत्पादकः पालकश्च। यः सरस्वत्याः प्रवाहविशेषः समुद्रप्रविष्टः समुद्रोदकेन संसृज्यमानः तज्जलं प्राप्य प्रसृतः। शशयो वेदगुहाशयः। तद्गम्यफलभूतः इति यावत्। येन विश्वा सर्वाणि वार्याणि वरणीयानि ब्रह्मादीनि पुष्यसि पालयसि। यो रत्नानि जनयन्ति तं ते तव स्तनं धातवे संपादय। तदुक्तं रत्नशास्त्रे—

समुद्राधस्तलं प्राप्य सरस्वत्या जलं शुभम्।
जनयित्वाथ रत्नानि वर्तयत्यपि तं परम्॥

रत्नमुत्पाद्यते भोक्तृभोग्यादीशवशादपि ।
सरस्वतीनदीसङ्गादब्धिं रत्नाकरं विदुः ॥

इति । अनेन रत्नसमृद्धिः प्रार्थिता । क्षुत्पिपासादिनिवृत्तौ रत्नादिना अश्रीकत्वादिदोषनिवृत्तौ च नैश्चित्ये ज्ञानप्रवृत्तिः सुकरा इति उभयं प्रार्थ्यते । तथा च भो देवतारूपिणि सर्वदेवमयि सरस्वति प्रसीद । वसुवित् । वसू वसनाच्छादनकर्तारौ जीवेश्वरौ वेदयति ज्ञापयति । अन्तर्भावितोऽत्र ण्यर्थः । विदितब्रह्मविद्याचार्यो हि देवतारूपिण्याः सर्वदेवतारूपायाः सरस्वत्याः । स्तनस्थानीयः । कः परमानन्दरूपः । भो सरस्वति तं तव स्तनं इह धातवे संपादय । तथा यस्ते द्वितीयः स्तनः सुदत्रः धर्माधर्मापेक्षया फलदाता ईश्वरः सोऽपि देवतारूपिण्याः सर्वदेवतामय्याः सरस्वत्याः स्तनस्थानीयः । भो सरस्वति तं स्तनं इह धातवे संपादय । सुदत्रः इत्यत्र दद दाने । अतः सुपूर्वात् क्विप् । सुखं ददाति इति सुदत् धर्मः धर्मवान् । मतुपो लुक् । सुदतः त्रायते इति सुदत्र ईश्वरः । पूर्वपदप्रकृतिस्वरः । कथं तर्हि सुधर्मेण त्रायते इति । सुपि स्थः—इत्यत्र सुपि इति योगविभागात् । तत्पुरुषे तुल्यार्थे—इति पूर्वपदप्रकृतिस्वरः । कल्पस्तु—

यस्ते स्तनो वाणि सरस्वतीशजीवात्मबोधश्रुतिवाग्विशेषः ।
जीवेशबोधात्मकुचो द्वितीयो द्वयं तदेतत् कुरु नोऽवनाय ॥

तथा—

यस्ते स्तनस्तीर्थसरस्वति त्वत्सोमप्रदो धान्यतृणादिहेतुः ।
यश्चाब्धिगो रत्नसमृद्धयेऽन्यो द्वयं तदेतत् कुरु नोऽवनाय ॥
यस्ते स्तनो देवि सरस्वति त्वदंशो गुरुश्चेत् स इह द्वितीयः ।
प्रोक्तः स्तनः सर्वसुखात्मकत्वं द्वयं तदेतत् कुरु नोऽवनाय ॥

इति ॥

अग्निमन्थने यज्ञेन यज्ञं इत्येषा परिधानीया । यज्ञेन यज्ञमयजन्त देवाः इति परिदध्यात्—इति सूत्रितत्वात् ।

**य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् ।**
**ते ह॒ नाकं॑ महि॒मानः॑ सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥५०॥**

**दे॒वाः** व्यवहर्तारः यजमानाः । **य॒ज्ञेन॑** निर्मथ्याग्निना **य॒ज्ञं** होमसाधनं आहवनीयं **अ॒य॒ज॒न्त** पूजितवन्तः । अनुष्ठानाय संयोजितवन्त इत्यर्थः । अग्नि

मथित्वा प्रहरति । तेनैवाग्नय आतिथ्यं क्रियते—इति हि तैत्तिरीयकम् । **तानि धर्माणि** अग्निसाधनानि कर्माणि **प्रथमानि** । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि **आसन्** फलप्रसवसमर्थानि अभवन् इत्यर्थः । **ते ह** ते च यजमानाः **नाकम्** । नास्मिन्नकं अस्ति इति नाकः स्वर्गः । तम् । **महिमानः** माहात्म्ययुक्ताः **सचन्त** संगताः । कीदृशं नाकम् । **यत्र** यस्मिन् नाके **पूर्वे** पूर्वतनाः **साध्याः** साधनाः यज्ञादिसाधनवन्तः । **देवाः** । कर्मदेवा इत्यर्थः । ते **सन्ति** निवसन्ति । तं सचन्त । तस्मादिदानीमपि मनुष्यैरेवं कर्तव्यं इत्यर्थः । यद्वा देवाः इदानीं देवभागमापन्नाः पूर्वं यज्ञेन अग्निना पशुभूतेन यज्ञं यष्टव्यमग्निं अयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम् । अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त—इति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाश्छन्दोभिमानिनः । आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते । छन्दांसि वै साध्या देवाः । तेऽग्रेऽग्निनाग्निमयजन्त । ते स्वर्गं लोकमायन् । आदित्याश्चैवेहासन्नङ्गिरसश्च । तेऽग्रेऽग्निनाग्निमयजन्त । ते स्वर्गं लोकमायन्—इति ब्राह्मणम् । एते देवाः स्वर्गे सन्ति भवन्ति । स्वर्गप्राप्ता इत्यर्थः । यद्वा यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुं अयजन्त पूजयन्ति । ते नाकं विष्णुलोकं महानुभावाः सचन्त संगच्छन्ते । यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम् । अग्निनाग्निमयजन्त देवाः—इत्यादि निरुक्तमनुसन्धेयम् ।

अथ ब्रह्मविद्यान्तर्भूतावान्तरविद्यानां फलोक्तिः । यस्ते सरस्वत्यै । यज्ञेन साध्येभ्यः सकामेभ्यः । उपलक्षणमिदम् । निष्कामेभ्यो ब्रह्मलोकार्थिभ्यश्च । एवमेतदृक्प्रतिपादनाय—इत्यनुक्रमणिकार्थः । ये यज्ञेन काम्यकर्मणा यष्टव्यमीश्वरं यजन्ति ते देवा भवन्ति स्वर्गे देदीप्यमानाः । अथ निष्कामफलोक्तिः । तानि निष्कामत्वेन अत्यन्तोत्कृष्टानि । यच्छब्दरहितः तच्छब्दः अत्यन्तोत्कृष्टवाची । धर्माणि धर्मसाधनानि यज्ञादीनि ज्ञानयज्ञस्य प्रथमानि पूर्वसाधनानि संभवन्ति । ब्रह्मविद्यापि द्विधा । सगुणा निर्गुणा च । अत्र निर्गुणायाः फलमिदम । ते अत्यन्तोत्कृष्टाः ह एव नाकं सुखम् । अक दुःखम् । अत्र द्वौ नञौ अतिशायिनं प्रकृतमर्थमाहुः इति नाकमानन्दरूपम् । नभ्राण्नपान्नवेदा—इति निपातनात् साधुत्वम् । महिमानो महान्तः ।

उपदिष्टमहावाक्यो महच्छब्देन कथ्यते ।

इति वचनात् उपदिष्टमहावाक्यात् जीवन्मुक्ताः सन्तः सचन्तः तेषां समवाये समवयन्ति । परमानन्दात्मका भवन्ति इत्यर्थः । सगुणब्रह्मविद्याफलम् । यत्र ब्रह्मलोके पूर्वे ब्रह्मादयः सन्ति तत्र साध्याः आध्यात्मसगुणध्यानेन सह वर्तमानाः सन्ति भवन्ति अपुनरावृत्ताः । कल्पस्तु—

काम्येन धर्मेण सुरादिलोको ज्ञानस्य निष्कामकृतिर्हि हेतुः ।
वाक्योपदिष्टाः स्युरिहैव मुक्ता ब्रह्मादिलोकः सगुणेशबुद्ध्या ॥

इति ॥

**समानमेतदुदकमुच्चैत्यव चाहभिः ।**
**भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥**

**एतत्** प्रसिद्धं **उदकं समानम्** । एकरूपमित्यर्थः । **अहभिः** कैश्चिदहोभिः ग्रीष्मकालीनैः । **उत् च एति** ऊर्ध्वं गच्छति । तथा अहभिर्वर्षकालीनैः **अव** तदुदकं अव **च** एति अवाङ्मुखं च गच्छति । चवायोगे प्रथमा—इति प्रथमाविभक्तिः न निहन्यते । रश्मिनाडचैव भूमिं प्राप्नोति । तदेवोच्यते । **पर्जन्याः** प्रीणयितारो मेघाः **भूमिं जिन्वन्ति** उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा **भू**मिष्ठान् प्रीणयन्ति । तथा **अग्नयः** आहवनीयाद्याः स्वे हुतया आहुत्या **दिवं** द्युलोकस्थान् देवान् **जिन्वन्ति** प्रीणयन्ति ॥

५१. अहंऽभिः-इति पदपाठः ।

ननु काम्यकर्मसगुणब्रह्मविद्ययोः देशान्तरप्राप्तिफलमुक्तम् । तन्न । तत् सृष्ट्वा तदेवानुप्राविशत्—इत्यधिकृत्य तस्यैव ब्रह्मणः प्रवेशश्रवणात् ब्रह्मात्मकस्य सर्वगतस्य निष्क्रियस्य जीवस्य मर्त्यत्वसंभवात् इत्याशङ्क्य उपाधिवशाद्गतिसंभवः इत्याह —समानं देशकालादौ समानमपि उदकं अकात् दुःखात् उद्गतमप्येतत् ब्रह्म अहभिः अहीयमानैः धर्माधर्मसंस्कारैरिन्द्रियैः प्राणैश्चोपहितं जीवभूतं सत् उदेति देवतादित्वमनुभवति । अव च नीचैरपि मर्त्यं मनुष्यादिरूपं अनुभवति च । एवमनुभाव्य जीवो यदा मनुष्यतां प्राप्तः तदा कर्माधिकारी जगद्यात्रां प्रवर्तयेत । अन्यथा जगज्जननदोषः स्यात् इत्याह—भूमिं मनुष्यादिसहितां पर्जन्याः हविषा जुष्टाः इन्द्रसूर्यादयश्च ये देवाः ते जिन्वन्ति प्रीणयन्ति वृष्ट्यादिना । दिवं देवादिसहितं

द्युलोकं जिन्वन्ति प्रीणयन्ति यजमानेन भूस्थेन समर्चिताः। भूस्थाः अग्न्यादयः हविर्दानेन स्वर्गस्थान् देवान् तर्पयन्ति इत्यर्थः। तदुक्तं भगवद्गीतायाम्—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।

इत्यारभ्य—

स मोघं पार्थ जीवति॥

इत्यन्तेन ग्रन्थेन। कल्पस्तु—

धर्मैरधर्मैरथवा सनाभिर्लिङ्गस्थजीवः स्वरुदेत्यपैति।

भूस्थाः सुरानारमयन्ति देवान् भूस्थान् सुरा आरमयन्ति वृष्ट्या॥

इति॥

सरस्वद्देवताके पशौ दिव्यं सुपर्णं इति वपायाज्या। दिव्यं सुपर्णं वायसं बृहन्तम्। स वावृषे नर्यो योषणासु—इति सूत्रितत्वात्। अन्वारम्भणीयायां सरस्वद्यागे एषैव याज्या। सूत्रितं च—दिव्यं सुपर्णं वायसं बृहन्तम्। आ सर्वं सवितुर्यथा—इति।

**दि॒व्यं सु॑प॒र्णं वा॑य॒सं बृ॒हन्त॑म॒पां गर्भं॑ दर्श॒तमोष॑धीनाम्।**
**अ॒भी॒प॒तो वृ॒ष्टिभि॑स्त॒र्पय॑न्तं॒ सर॑स्वन्त॒मव॑से जोहवीमि॥ ५२॥**

**दि॒व्यं** दिवि भवं **सु॒प॒र्णं** शोभनगमनं **वा॒य॒सं** गमनशीलं **बृ॒हन्तं॑** महान्तं **अ॒पां गर्भं॑** वृष्ट्युदकानां गर्भवदुत्पादकम्। **ओष॑धीनां** ओषधीः **द॒र्श॒तं** दर्शनाय। दर्शयन्तं इत्यर्थः। यद्वा ओषधीनां गर्भं दर्शतं इति पृथग्विशेषणम्। किंच **अ॒भी॒प॒तः** आनुकूल्येन **वृ॒ष्टिभिः॑ त॒र्पय॑न्तं** जगत् प्रीणयन्तम्। यद्वा अभीपतः अभिगमनवतः सलिलाधारान् तटाकादीन् तर्पयन्तम्। अथवा अभिगन्ता अहम्। **सर॑स्वन्तं** उदकवन्तम्। सरः इत्युदकनाम। देवं सूर्यं वा। **अव॑से** रक्षणाय **जो॒ह॒वी॒मि॒** पुनः पुनराह्वयामि॥

५२. सु॒ऽप॒र्णम्। वृ॒ष्टिऽभिः॑। इति पदपाठः।

अत्र सूक्तार्थोपसंहारः। दिवि भवं दिव्यं स्वर्गिणं कर्मफलभोक्तारं सुपर्णम्। सुपर्णमारोहयति इति। णिजचौ। सुपर्णवाहनाधिरूढविष्ण्वादिलोकार्थं सगुणोपासकं स्वर्गिणं च कर्मविद्याभ्यां भ्रष्टम्। नीचकर्मकरणेन च वायसयोनिं प्राप्तम्। तथा बृहन्तं ब्रह्मरूपिणं आत्मानं च। तथा अपां गर्भं अप्प्रमुखसूक्ष्मभूतेन्द्रियाणां आपगाना गर्भं

